दर्शनरूपं विहाय धर्मोपदेशाच्चेति गुणसूत्रोक्तमेव हेतुमङ्गीकृत्य वेदशब्द-स्याभ्यांसादेव पञ्चषवारमभ्यासात् तेनैव वेदधर्मत्वमुच्चैस्त्वादीनामिति।

एवं बहुषु विषयेषु, किं बहुना बलाबलाधिकरणम्, श्रुतिलिंगाधि-करणमितिप्रथिते वाक्यप्रकरणाधिकरणमिति लेखनञ्चेत्यादिकं समुद्वेजयति विद्वत्तल्लजानिति। नानाशाखादर्शिभिः न्यायव्युत्पादनार्थं प्रवृत्तैरुक्तानाम-र्थानां पृष्ठतः करणम्, स्वमनीषयाधिकरणार्थकल्पनम्, न्यायकल्पनं वा तेषामेवशोभते। यतो हि मीमांसान्यायकान्तारसंचारपञ्चाननानां वार्तिककार-प्रभृतीनामेव शास्त्रार्थ निर्णयेऽधिकारः, न तु त्वादृशां परोपदेशमात्रगर्त-शरणानाम् भीरुफेरूणाम्। अनुरूपं पठन्ति हि वृद्धाः—

'परीपाकाच्छास्त्रे यदुदितमहो वार्तिककृता।
तदज्ञात्वा चान्यैरिह बहुविधमन्यथयितम्॥
तदुद्दूष्याहं स्वां प्रकृतिमनयं वार्तिकमतम्।
तदज्ञात्वा दूष्यं न विबुधजनैर्द्वेषविमुखैरि' ॥ ति।

## सिंहावलोकनम्।

भाष्य-वार्तिक-शास्त्रदीपिका-न्यायसुधा-नयविवेक-वरदराजीयानामुपरि अर्वाचीनैर्द्वैतमतावलम्बिभिः समुद्भावितान् दोषान् साधकबाधक-प्रकारपरीक्षया निराकृत्य तैरुत्प्रेक्षितानां प्रकाराणांमाभासीकरणेन उद्धृतानां ग्रन्थानाम्, अधिकरणानां सूत्राणाञ्च दुरूहतमं गम्भीरमाशय-माविष्कुर्वाणाः भाष्य-वार्तिकादिभिः सुव्यवस्थितमीमांसाशास्त्रमर्याद-मुसंहारप्राबल्यमर्दनेन उपक्रमप्राबल्यमक्षुण्णं व्यवातिष्ठिपन्मखीन्द्राः।

अयं च विषयः तत्र तत्रोपरि सन्निवेशितैः शीर्षकैः टिप्पण्याम् ग्रन्थोद्धरणेन सम्यगावेदितोऽस्माभिः। प्रसङ्गेऽस्मिन दुरूहशिक्षायाः उपसंहारगतं पद्यमन्यथयितं किञ्चित् उक्तार्थस्योपष्टम्भकं स्मृतिपथमायाति।

यथा—

'कथं बत निरुध्यतां कमलनालसूत्रैस्त्वया।
मदत्रुटितशृंखलाबलयबन्धनस्सिन्धुरः ॥
उपक्रमपराक्रमे तदिह दूषणान्वेषणैः।
अलं पुरहरे चिरं मन इदं सखे स्थाप्यताम्' ॥ इति।

## कालादिचर्चा

दीक्षितेन्द्राणामैतिह्यम्, कालः, तेषां कृतयश्चेत्येते विषया अस्माभिः केन्द्रीयशिक्षामन्त्रालयस्यानुदानेन हिन्दूविश्वविद्यालयेन प्रकशितस्य विधिरसायनस्य भूमिकायां २५ प्रभृति ३२ पर्यन्तेषु पृष्ठेषु कणेहत्य विस्तरेण विवेचिताः। अवजिगमिषुभिः तत्रैव ते द्रष्टव्याः।

## अस्य संस्करणस्य विशेषः।

अयञ्च निबन्धो मार्कि षष्टिवर्षेभ्यः प्राक्द्राविडोपनामकैः धर्मप्राणैः लक्ष्मणशास्त्रिवर्यैर्मुद्रापित आसीत्। तत्र वहवोंऽशास्त्रुटिता आसन्। ते च प्रपूरिताः अस्मिन्संस्करणे। अर्वाचीनैद्वैतवादिभिः पूर्वपक्षवादिभिस्तर्क-ताण्डव-न्यायामृत-चन्द्रिकाणां सन्दर्भस्योल्लेखेनास्य विश्लेषणं कृतम्।

शुद्धः पाठ उपरि निवेशितः, मुद्रितपुस्तकपाठः, स्वपुस्तकपाठश्च अधस्ताट्टिप्पण्यां सन्निवेशितः, त्रुटितोंऽशः, प्रपूरितः अनपेक्षितः, द्विवारम् मुद्रितश्चांशः परित्यक्तः, क्वचित् क्वचित् अर्थविशेषः प्रदर्शितः, उद्धृतानाम् वचनानामाकरादिकं यथासंभवं सूचितमित्यादयो विशेषा बोध्याः।

## कृतज्ञताप्रकाशनम्।

अस्य प्रसाधने श्रीमद्भिः यू० जी० सी० प्रोफेसरपदमलङ्कुर्वाणैः पण्डितराजैः एस० सुब्रह्मण्यशास्त्रिवर्भिः संशोधितस्वपुस्तकप्रदानेन, तदा तदा तत्र तत्र सांदग्धस्थले पाठभेदं निर्धार्य महानुपकारोऽकारि, अतस्तेभ्य बहु कृतज्ञतामाविभर्मि।

## समर्पणम्

स्वर्गीयाः परमाराध्या अस्मत्पूज्यपादा आचार्यचरणा महामहोपाध्या-याश्शास्त्ररत्नाकरादिविरुदाङ्किताश्चिन्नस्वामिशास्त्रिचरणा महता प्रयासेन दीक्षितेन्द्रग्रन्थावलीनाम्ना, तदीयग्रन्थानां प्रकाशनायैकां समितिम् भारतवर्षीयाणां सुप्रख्यातनामधेयानां प्राच्यपाश्चात्यकोविदानां सम्मत्या समुदयूयुञ्जन्, यस्या अध्यक्षः प्रो० सरराधाकृष्णन् महोदयो निर्विवादम् निर्वाचित आसीत्। परं करालस्य कलेर्वशात्, भारतीयानामस्माकम् दौभाग्यद्वा न किञ्चित्कार्यं साधितं तया समित्या। परमद्यत्वेऽस्मत्पूज्य-

पादा दीक्षितेन्द्रग्रन्थावल्या आंशिकस्यास्य प्रबन्धचिन्तामणेः प्रकाशनेन सत्यसंकल्पा इति कृतिमिमां तेषां दिव्यसन्निधौ समर्पयन् आत्मानम् धन्यं मन्ये, तेषामशीर्वचनंबलेनैव अन्येषामपि तदीयग्रन्थानां प्रकाशनम् संपत्स्यते-इति ।

एवं अध्ययनाध्यापनादिबहुव्यासक्तचित्तोऽहं महता प्रयासेन, प्रणिधानेन, उपलब्धसामग्र्या च निबन्धमिमं समपीपदम् । तत्र मनुष्यमात्रसुलभानपराधान् मर्षयित्वा गुणग्रहणेन मामनुगृह्णन्तु गुणगृह्याः विपश्चिदपश्चिमाः । दीक्षितेन्द्राणां पूर्वोत्तरमीमांसाद्वयनयव्युत्पादनपरिपाटीमधुमधुरिमाणमास्वादयन्तु शास्त्रार्थविनोदरसिकाः-इति ।

अन्ते च सविनयम्—

'तद्विद्वांसोऽनुगृह्णन्तु चित्तश्रोत्रैः प्रसादिभिः ।
सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः ॥
न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः ।
दोषोह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥
आगमप्रवणश्चाहं नापवाद्यः स्खलन्नपि ।
नहि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते' ॥

इत्यभियुक्तसूक्तिभिरेव विद्वत्तल्लजान् सादरं प्रार्थयते—

श्रीमतामाश्रवः—

म० म० श्रीचिन्नस्वामिशास्त्रिचरणानां शिष्यः

अ० सुब्रह्मण्यशास्त्री

( कपालतडागपुराभिजनः )

मीमांसावेदान्ताचार्यः

मीमांसा-धर्मशास्त्रप्राध्यापकानामन्यतमः

प्राच्यविद्या-धर्मविज्ञानसंकायस्थः ।

का० हि० वि० वि०

वाराणसी–५

मकरसंक्रान्तिः

सं० २०२९ वि०

# उपक्रमपराक्रमस्य विषयानुक्रमणिका

विषयविवरणम्

इत्युपक्रमपराक्रमस्य विषयानुक्रमणिका समाप्ता ।



सर्वतन्त्रस्वतन्त्र-चतुरधिकशतग्रन्थनिर्मातृ-श्रीमदद्वैतविद्याचार्य-
श्रीरङ्गराजाध्वरिवरसून्वप्पय्यदीक्षितेन्द्रविरचितः

# उपक्रमपराक्रमः

## कर्तव्यार्थप्रतिज्ञा

उपक्रमस्य प्रबलत्वमूचिरे यथोपसंहारविरोधिनो बुधाः।
प्रतिष्ठितां तामिह तर्कसंततिं प्रबोधयामः प्रतिकूलजल्पितान् ॥ १ ॥

## उपक्रमन्यायव्युत्पादनम्

मीमांसकास्तावदुपक्रमोपसंहारयोर्विरोधे सत्युपक्रमस्य प्राबल्ये न्यायमेवमाहुः। "सर्वस्यैव हि शब्दस्य स्वार्थातिलंघने विरोधः कारणम्, स च प्रतियोगिनि दृष्टे विज्ञायते' तं० वा० पृ० ८०६। न चोपक्रमदशायाम् उपसंहारो विरोधी ज्ञातः। अत उपक्रमो मुख्यवृत्तिरेव युक्तः, उपसंहारः मुख्यवृत्तिश्चेन्न तेन संबध्यते। आकांक्षावशेन हि संबन्धः, न च पूर्वप्रतीतस्य स्वविरुद्धार्थे भवत्याकांक्षा। अत उपसंहारस्तदनुरोधेन बलाल्लक्षणादिकं प्रतिपद्यते। अत एव वेदोपक्रमाधिकरणे, अश्वप्रतिग्रहेष्टयधिकरणे चोपक्रमानुसारेणोपसंहारो नीतः। तद्यथा। तृतीयाध्याये चिन्तितम्—'श्रुतेर्जाताधिकारस्स्यात् मी० द०३-३-१। ज्योतिष्टोमे प्रजापतिर्वा इदमेक एव[1] आसीत्। स तपोऽतप्यत, तस्मात्तपस्तेपानात् त्रयो देवा अजायन्त, अग्निर्वायुरादित्यः, ते तपोऽतप्यन्त, तेभ्यस्तेपानेभ्यस्त्रयो वेदा अजायंत, अग्नेर्ऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात्सामवेदः[2] इत्युपक्रम्य श्रूयते- 'तस्मादुच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ने 'ऐ० ब्रा० १०-१ ति। तत्र संशयः—किमुच्चैष्ट्वादिविधौ ऋगादिशब्दैस्तदभिधेयानामृगादीनाम् ग्रहणम्, उत वेदानामिति, उपक्रमे वेदशब्दश्रवणात्, उपसंहारे ऋगा-

१—इदमेवाग्रे पा।
२—सर्वस्यापीति आदर्शपुस्तके० पा०

दिशब्दश्रवणाच्च । वेदशब्दो हि मन्त्र-ब्राह्मणसमुदायात्मकस्य काठकादिग्रन्थविशेषस्य वाचकः,

'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्' म० अ० ३ श्लो० २ इत्यादिव्यवहारात् । ऋग्यजुस्सामादिशब्दास्तु 'तेषामृग्यत्रार्थवशेन पादव्यवस्था, शेषे यजुःशब्दः, गीतिषु सामाख्ये' मी० द० २-१-३५-३६-३७ति सूत्रैः सपादबद्धापादबद्धमंत्र[1]गीतिविशेषवाचकत्वेन निर्णीताः । अतः वेदशब्दस्य, ऋगादिशब्दानाञ्च विभिन्नार्थकत्वाद्भवति संशयः। उपक्रमोपसंहारयोर्विप्रतिपत्तेरेकवाक्यत्वाच्च उभयोरेकविषयत्वेऽवश्यंभाविनि किमुपसंहारस्थविध्युद्देशवशादुपक्रमस्थार्थवादगतवेदशब्दो वेदैकदेशऋगादिपरो भवतु, किंवा उपक्रमगतार्थवादवशादुपसंहारास्थविध्युद्देशगतऋगादिपदमृगादिप्रायवेदपरं भवत्विति ।

## उपक्रमाधिकरणपूर्वोत्तरपक्षयोः फलकथनम् ।

पूर्वपक्षे यस्मादृगादयः प्रजापतिसकाशाज्जातेभ्योऽग्न्यादिभ्यो जाताः, तस्मात्प्रशस्तैस्तैरुच्चैष्ट्वादिनियतस्वरयुक्तैरेव कर्म कर्तव्यमिति कर्मांगभूतानामृगादीनां वेदविशेषानादरेण यत्किंचिद्वेदस्थानामुच्चैष्ट्वादिविधानम् । सिद्धान्ते तु यस्मादुक्तरूपेभ्योऽग्न्यादिभ्यो ऋग्वेदादयो जाताः, तस्माद्यदृग्वेदादिभिः क्रियते-विधीयते कर्मवृन्दम्, तस्य प्रशस्तस्योच्चैष्ट्वादि कर्तव्यमिति तत्तद्वेदविहितकर्मराशिगुणत्वेनोच्चैष्ट्वादिविधानमिति फलभेदः ।

## उपक्रमाधिकरणपूर्वपक्षः

तत्र विध्युद्देशस्य प्रधानत्वादप्राप्तविषयत्वेन विधित्वात् 'न विधौ परः शब्दार्थः' इति न्यायाच्च न तत्र लक्षणा, किन्त्वर्थवादस्य गुणत्वादनुवादत्वेन लक्षणासहिष्णुत्वाच्च तत्रैव लक्षणा युक्तेति, ऋगादिशब्दैस्स्वाभिधेयानाम् ग्रहणमिति पूर्वपक्षः ।

## उपक्रमाधिकरणसिद्धान्तः

सिद्धांतस्तु-लब्धात्मनः प्रधानस्य गुणाद्बलीयस्त्वम्, विध्युद्देशस्त्विह

---

१—मन्त्रविशेषवाचकत्वेनेति मु० पु० पा० ।

ऋगादिविषयत्वेनात्मानं न लभते। उपक्रमगते हि वेदशब्देऽसंजातप्रतिपक्षे यथाश्रुतार्थेऽवगते तदुपसंहारगतमुपजातप्रतिपत्त्वं ऋगादिपदं यथाश्रुतार्थं सत्तदेकवाक्यतां न प्रतिपद्यते। नहि संभवत्येवं स्तुति-विधानयोरन्वयः—यस्मादेवमेते वेदा जाताः, तस्मादृगा[1]दीनां उच्चैष्ट्वादि कर्तव्यमिति। तेन ऋगादिशब्दलक्षणया तस्योच्चैः ऋग्वेदेन क्रियते इत्यादिरूपेण तदनुगुणतयैवात्मलाभः। अतः प्रधानत्वेऽपि विध्युद्देशस्यार्थवादानुसारेणैव लब्धात्मकस्य उपक्रमविरोध्यर्थोपस्थापकत्वाभावान्न तदनुसारेणोपक्रमगतस्य वेदशब्दस्य ऋगादिलक्षणा कल्पनीया। नापि-वेदस्तुतेरेव लक्षितलक्षणादिना तदवयवभूतऋगादिस्तुतौ पर्यवसानं कल्पनीयम्। अप्राप्तविषयत्वन्त्वसिद्धम्। उपक्रमे वेदानां प्रस्तावेन वेदसंस्पर्शेन किंचिद्विधास्यत इत्यवगते, किन्तद्विधेयमित्येतावदनवगतमपेक्षितञ्च विद्धयुद्देशाद् गृह्यत इति, विध्युद्देशस्थितानामप्यृगादिशब्दानामवगतविषयत्वात्। तस्मात्तैर्लक्षणया वेदानां ग्रहणमिति।

## अश्वप्रतिग्रेष्टयधिकरणार्थनिरूपणम्

तथा—तृतीये एव चिंतितम्—'अचोदितं च कर्मभेदात्'। 'प्रजापतिः वरुणायाश्वमनयत्, स स्वां देवतामार्च्छत्, स पर्यदीर्यत, स एतं वारुणं चतुष्कपालमपश्यत्, तं निरवपत्, ततो वै स वरुणापाशादमुच्यत, वरुणो वा एतम् गृह्णाति, योऽश्वं प्रतिगृह्णाति, यावतोऽश्वान् प्रतिगृह्णीयात्, तावतो वारुणांश्चतुष्कपालान्निर्वपेत्, वरुणमेव स्वेन भागधेयेनोपधावति, स एवैनं वरुणपाशान्मुञ्चति' (तै. सं. २–३–१२) इति श्रूयते। तत्र किमश्वदातुरिष्टिर्विधीयते, उत तत्प्रतिग्रहीतुरिति संदेहः।

### विषयवाक्यशोधनम्।

उपक्रमे हि प्रजापतिर्वरुणाय प्रतिग्रहीत्रे अश्वमनयत्—ददावित्यर्थः। सोऽश्वदाता प्रजापतिः स्वां देवतामश्वदाने संप्रदानत्वेन आत्मीयदेवतारूपं वरुणमार्च्छत्-प्रापत्। अश्वं दत्वा वरुणग्रहं जलोदरव्याधिपर्यायं प्राप्तवान्, स प्रजापतिः पर्यदीर्यत—तेन व्याधिनोदरे पांरतो विदीर्णोऽभूदिति, प्रजापतेरश्वदानेन दोषं संकीर्त्य तस्य

१—ऋग्वेदादीनाम् मु. पु. पा.।

दोषनिर्हरणार्थमिष्ट्यनुष्ठानकीर्तनाद्श्वदातुरियमिष्टिर्विधित्सितेति गम्यते। उपसंहारे च तत्प्रतिग्रहीतुर्विधीयमाना दृश्यते। न च 'स स्वां देवतामार्छ-दि'त्यादौ तच्छब्दानां वरुणपरत्वकल्पनायामुपक्रमेऽपि प्रतिग्रहीतुरेवेष्टिः विधित्सिता गम्यत इति शक्यं वक्तुमिति वाच्यम्, [1]विभक्त्यैकरूप्येण तेषां प्रजापतिपरत्वौचित्यात्, स्वां देवतामिति च वरुणं प्रत्येव वरुणस्य देवतात्वोक्त्ययोगात्। 'तं निरवपदि'ति वरुणस्य वरुणोद्देशेन त्यागायोगाच्च। आत्मने संकल्पितस्य[2] द्रव्यस्य स्वत्वनिवृत्त्यसंभवात्। तस्मादस्ति तावदुप-क्रमोपसंहारयोर्विरोधस्फूर्तिः। भाव्यं च तयोरविरोधेनैकवाक्यतया। अतः किं विध्युद्देशानुसारेण प्रतिग्रहीतुरियमिष्टिः, अर्थवादस्तु तथाऽश्वो दान-प्रतिग्रहसंबन्धे गर्हितः, यदा दातुरपीयमिष्टिः स्यात्, किमुत प्रतिग्रहीतुरिति कैमुत्यतात्पर्येण दूरं नेतव्यः। किं वा उपक्रमानुसारेण दातुरेव, प्रति-गृह्णातिस्तु कथंचिद्दान एव योजनीय इति संभवति संशयः।

## वेदोपक्रमाधिकरणेनागतार्थत्वम्, अश्व-प्रतिग्रहेष्ट्यधिकरणपूर्वपक्षश्च।

तत्र पूर्वः पक्षः। वेदोपक्रमाधिकरणे उपक्रमप्राबल्ये स्थितेऽपि नेह ततो निर्णयो युक्तः, तत्र उपक्रमसंकीर्तिता वेदा उपसंहारगतैर्ऋगादि-शब्दैरनुवदितुं शक्यंते, वेदैकदेशत्वात् ऋगादीनाम्। उपक्रम एवऽग्नेः ऋग्वेदः' इत्यादिना वेदानामृगादिसंबन्धस्य कीर्तिततयाऽनत्यन्तपरित्यक्तो-पक्रमार्थत्वाच्च।

'ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः।
सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः' तै. ब्रा. १२-८-९॥

इत्यादिषु केवलानां ऋगादिशब्दानां ऋग्वेदादिषु लक्षणाया वेदे दृष्टत्वाच्च। 'ऋचः सामानि यजूंषि' इत्युपक्रम्य 'सैषा त्रय्येव विद्ये'ति निर्दिष्टस्य त्रयीशब्दस्य त्रयीविद्योऽयं ब्राह्मण इति वेदत्रयाभिज्ञे निर्देशेन वेदत्रयपरतया लोकानां प्रयोगेण ऋगादिशब्दानां वेदेषु लक्षणाया लोक-संमतत्वाच्च। अतएव तस्मिन्नधिकरणे 'वेदो वा प्रायदर्शनादि'ति-

१—विभक्त्यैक्यरूपेण इति मु. पु. पा.।

२—संकल्प्यमानस्य मु. पु. पाठः।

सिद्धान्तसूत्रेण उपक्रमप्राबल्योक्त्यनन्तरम् 'लिंगदर्शनाच्च', त्रयीविद्याख्या-च तद्विदि 'इति सूत्राभ्यां वेदे लोके च प्रयोगेण लक्षणाया निरूढत्वं दर्शितम्। न चेह तथा प्रतिगृह्णातिर्दाने दृष्टप्रयोगः, प्रत्युत तदत्यन्तविरुद्धार्थ एव। तेन तत्रोपक्रांतमर्थमुपसंहारगतः शब्दोऽनुवदितुमर्हतीति तत्रोपक्रमानुरोधेऽपि, अत्र न तथेति विध्युद्देशस्य प्राधान्याप्राप्तविषयत्वाभ्याम्-अवगतं प्राबल्यमव्याहतमिति, तदनुरोधेनैव उपक्रमो नेतव्यः–इति।

## अश्वप्रतिग्रहेष्टयधिकरणसिद्धान्तः

सिद्धान्तस्तु-उपक्रमप्राबल्यन्यायेनैव त्वलब्धात्मनि प्राधान्यस्याप्रयोजकत्वात्, अप्राप्तविषयत्वस्य चासिद्धेः। उपक्रम एवाश्वदातुः प्रजापतेर्वरुणग्रह-निर्मोचनहेतुत्वेन इष्टेः प्रशंसावशात् अश्वदातुरियमिष्टिर्विधास्यत इत्यवगतत्वात्। ततश्चार्थवादस्य विधिशक्त्यभावात्तावन्मात्रं ततोऽनवगतम् विध्युद्देशाद्ग्राह्यम्। विधिविषयांशस्त्वर्थवादावगत एवेति, दान एव प्रति-गृह्णातिर्योजनीयः। प्रतिगृह्णातीति प्रतिग्रहकर्तोच्यते, यः प्रतिग्रहहेतु-भूतं दानमाचरति, सोऽपि प्रतिग्रहकर्तेति व्यपदिश्यत एव। हेतुकर्तर्यपि स्व-व्यापारद्वारा प्रयोज्यव्यापारकर्तृत्वसत्त्वात् तत्र प्रयोजकव्यापारकर्तृत्वरूप-हेतुकर्तृत्वविवक्षायांणिजन्तप्रयोगनियमेऽपि तद्द्वारकप्रयोज्यव्यापार-कर्तृत्वविवक्षयामणिजंतप्रयोगोऽपि न विरुध्यते। न च साक्षात्कर्तृत्वे एव तच्छक्तिः, लुङ्लृटोरनद्यतनाद्यतनसाधारण्येन भूतभविष्यन्मात्रे इव कर्तृप्रत्ययानां साक्षात्परंपरासाधारण्येन कर्तृत्वमात्रे शक्त्युपगमात्। दृष्टश्च हेतुकर्तर्यप्यणिजंतप्रयोगः। यथा स्वामिनि संविधानमात्रकर्तरि साक्षाद्विलेखनमकुर्वत्यपि 'षड्भिर्हलैः कर्षती'ति। ततश्च प्रतिगृह्णातेः कर्षतेरिव साक्षात्कर्तृवचनत्वस्य मुख्यस्वातंत्र्यविषयतयौत्सर्गिकत्वेपि कर्षतेष्षड्हलोपादानसामर्थ्यात् प्रयोजककर्तृपरत्ववदस्याप्युपक्रमैकवाक्यता-सामर्थ्यात्तत्परत्वमुपपद्यते। तेन यद्यपि वेदोपक्रमाधिकरणोक्तान्यार्थदर्शन-रूपाभ्युच्चययुक्तिरिह नास्ति, तथापि कर्षतिन्यायेन प्रयोगनिर्वाहादुपक्र-मानुरोधेन निर्णयो युक्तः।

किं च तत्र स वक्तव्योऽभ्युच्चयः, उपक्रमे प्रजापतेस्तत्स्रष्टृतयाग्न्यादीनां तत्स्रष्टृतया वेदानांच कीर्तितत्वेन उपक्रमो वेदविषय एवेति निश्चेतुम-शक्यत्वात्। तत्र वेदजनकाग्न्यादिजनकत्वेन प्रशंसया प्रजापतेर्वा प्रजा-

पतिजातत्वेन वेदजनकत्वेत च प्रशंसयाऽग्न्यादीनां वा, प्रजापतिसुताग्न्यादिजातत्वेन प्रशंसया वेदानां वा किंचिद्विधास्यत इत्यवगते उपसंहारगतानामृगादीनां च तेषामन्यतमत्वाभावेन ऋगादिशब्दानां यथाश्रुतार्थासंभवे तेषामुपक्रांतेषु प्रजापत्यादिषु किंपरत्वमवसेयमित्यत्र नियामकत्वेन तेषां वेदेषु लक्षणानिरूढिप्रदर्शनापेक्षणात्। नत्वत्र तदपेक्षास्ति। अत्रोपक्रमे वारुणेष्टिर्वरुणग्रहनिर्मोचनहेतुत्वेन प्रशस्यत इति व्यवस्थितस्तुत्यवगमात्। तस्मादिहाप्युपक्रमानुरोधेन निर्णय इत्युपसंहाराडुपक्रमः प्रबलः-इति।

## अत्र चन्द्रिका-तर्कताण्डवादिकाराणां मतस्यानुवादः

'अत्र केचिदर्वाचीनाः कल्पयन्ति। उपक्रमाडुपसंहारो बलीयान्, तद्व्याख्यानरूपत्वात्। एकस्मिन्वाक्ये हि प्रथमभागेन किंचिदर्थे धीस्थे चरमभागस्य तद्विरोधिनोऽवैयर्थ्याय तद्व्याख्यानरूपत्वं कल्पनीयम्, व्याख्यानस्य पाश्चात्यत्वनियमात् लोके गामानय, बलीवर्दमानये'त्यादौ तथा दर्शनाच्च। व्याख्येयस्य च निश्चितप्रामाण्यव्याख्यानुसारेणार्थनिर्णयो' युक्तः, व्याख्यानतो विशेषप्रतिपत्तिरिति प्रसिद्धेः। वेदेप्युग्रं वचो अपावधीमित्यादिमन्त्राणां 'अशनायापिपासे ह वा उग्रं वचः'त्यादिव्याख्यानरूपब्राह्मणानुसारेणार्थाङ्गीकाराच्च।

---

१—अन्यत्र दर्शनादिति मु. पु. पा.

२—चन्द्रिकाकारस्य व्यासराजाचार्यस्य मतं खण्डयितुं तदुक्तमर्थमनुवदति। 'अत्र केचिदित्यादिना पूर्वपक्ष' इत्यन्तेन।

---

जिज्ञासूनांसुखावगतये तर्कताण्डवग्रन्थसन्दर्भोधस्तादुद्ध्रियते।

तथाहि—अत्र स्वार्थे स्वशब्दात्मकानामप्युपक्रमादीनां समन्वयसूत्रे—

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये,

इति भाष्ये च तात्पर्यलिंगत्वमुक्तम्।

अनुव्याख्याने च—ज्ञानपादीये—

'उपक्रमादिलिंगानां बलीयो ह्युत्तरोत्तरम्।

## अपच्छेदाधिकरणार्थवर्णनम्

तथा परत्वादप्यपच्छेदाधिकरणन्यायेनोपक्रमादुपसंहारो बलीयान्। षष्ठे 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदि' मी० द० ६-५-५४ त्यपच्छेदाधिकरणे ज्योतिष्टोमे'अध्वर्युं प्रस्तोताऽन्वारभते,प्रस्तोतारमुद्गाता'उद्गातारं प्रतिहर्ते'त्यादि-क्रमेणाऽन्वारभ्य प्रसर्पतामध्वर्य्वादीनां मध्ये यदि कचिदुद्गातृ–प्रतिहर्त्रोः क्रमेणाऽन्वारम्भविच्छेदः स्यात्, तदा तन्निमित्तयोः प्रायश्चित्तयोः 'यद्युद्गाता अपच्छिद्येत, अदक्षिणो यज्ञः संस्थाप्य इति, यदि प्रतिहर्ताऽपच्छिद्येत' सर्ववेदसं दद्यादि'ति च विहितयोः अदक्षिणक्रतुसमापन–सर्वस्वदक्षिणा दानरूपयोर्विरुद्धयोः समुच्चित्याऽनुष्ठानाशक्तेरन्यतरस्मिन्ननुष्ठेये किं पूर्वनि-मित्तकमनुष्ठेयम्, उतोत्तरनिमित्तकमिति संशय्याऽनुपसंजातविरोधि-

---

श्रुत्यादौ पूर्वंपूर्वञ्च ब्रह्मतर्कविनिर्णयादि'त्युपक्रमादीनां परबलीयस्त्वमुक्तम्।

वैराग्यपादे 'प्रथमेऽश्रवणादिति चेदि'त्यत्र न्यायविवरणे चोपक्रमप्रामाण्यार्थमेवोपसंहारानुसारित्वमंगीकृतम्, व्याख्यानस्य पश्चात्तनत्वनियमादित्युपसंहारस्योपक्रमात् प्राबल्ये हेतुरुक्तः।

टीकायामपि तदनुरोधेनोपक्रमादुपसंहारो बलीयान्, व्याख्यानरूपत्वादित्युक्तम्। उपक्रमादित उपसंहारस्यप्राबल्यम्, उदाहरणादिकमस्माभिस्समन्वयसूत्रे चन्द्रिकायामुक्तं द्रष्टव्यम्। तस्यार्थतोऽनुवादोऽयम्।

१—मीमांसकास्तु—उपसंहारादुपक्रमो बलीयानित्याहुः। तन्न। तथात्वे अक्ताधिकरणादिबहुबाधप्रसंगात्। अक्ताधिकरणे 'अक्ताः शर्करा उपदधाति' इत्युपक्रमेण 'तेजो वै घृतमि'त्युपसंहारस्य, वासः परिधत्ते, इत्युपक्रमेण च एतद्वै सर्वदेवत्यम्, यत् क्षौममित्युपसंहारस्यानुसरणात्।

२—वैश्वानराधिकरणे च 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्युपक्रमेऽसंवलिताधिकारप्रतीतेः 'यस्मिन् जाते एतामिष्टिं निर्वपति, पूत एव स तेजस्व्यन्नादः' इत्युपसंहारेण बाधात्।

त्वात्पूर्वनिमित्तकमनुष्ठेयमिति प्राप्ते, परनिमित्ते सति तन्निमित्तशास्त्रस्य दुर्निवारप्रवृत्तिनिमित्तत्वात्तस्य च पूर्वाबाधेनानुत्पत्तेः, पूर्वोपमर्देनैवोत्पत्तिनियमात्परनिमित्तकमेवानुष्ठेयमिति सिद्धान्तितम्।

उक्तञ्च—

'पूर्वं परमजातत्वादबाधित्वैव जायते।
परस्यानन्यथोत्पादान्नत्वबाधेन संभवः' (तन्त्र 'वा० पृ. ८५९।)' इति।

## उपक्रमन्यायखण्डनम्, वेदोपक्रमन्यायविरोधपरिहारश्च

यत्त्वनुपसंजातविरोधित्वादुपक्रमस्य प्राबल्यमुक्तम्। तन्न। सर्वत्रापातजप्रत्ययस्यैव प्राबल्यप्रसंगेन विमर्शवैयर्थ्यापत्तेः। अतो नोपक्रमस्य

---

२—तद्व्यपदेशाधिकरणे च 'श्येनेनाभिचरन् यजेते'त्युपक्रमस्थश्येनशब्दस्य 'यथा वै श्येन' इत्युपसंहारेण गौणार्थस्वीकारात्।

नन्वक्ता इत्यत्रोपदधातीति वर्तमानापदेशत्वेन विधेरप्रत्यक्षतया स्तुत्युन्नेयत्वात्, उपजीव्यस्तुतिसमर्पकत्वादर्थवादोऽनुसृतः, न तूपसंहारत्वात्। अतएव शाबरभाष्ये वर्तमानापदेशत्वादित्युक्तमिति चेत्। न। अक्तशर्करोपधानस्य वर्तमानत्वाभावेनोपदधातीत्याख्यातस्य पञ्चमलकारतया 'वसन्ताय कपिञ्जलानालभत' इत्यादाविव लिङादेरभावेऽपि विधिनिरपेक्षमेव विधिसिद्धेः, 'इमां स्पृष्ट्वोद्गायेत्, इमाम् हि विश्वा भूतान्युपजीवन्ति' इत्यक्ताधिकरणोदाहरणान्तरे लिङ एव श्रवणाच्च।

नन्वथापि—

'समाप्यते विधिः कश्चित् कदाचिन्नाप्ररोचितः।
श्रुते प्ररोचनां दृष्ट्वा विधिस्तत्रानुमीयते'॥

इति वार्तिकोक्तन्यायेन प्रवृत्त्युपयुक्तप्ररोचनां विना प्रवर्तकस्य विधेरपर्यवसानात्, सति चार्थवादे वसन्तायेत्यादिनिरर्थवादविधेरिव विधेरेव प्ररोचकत्वकल्पनायोगात् स्वसमाप्त्यर्थमपेक्षितत्वात् विधिनाऽर्थवादोऽनुसृतः, नतूपसंहारत्वादिति चेत्।

न। उपसंहारस्याप्राबल्ये हि 'न विधौ परः शब्दार्थ' इति न्यायेन विधेरनन्यपरत्वात् प्रधानत्वात्, अर्थवादस्य तु वैपरीत्यात् तत्स्थघृतशब्दस्य 'गुणे त्वन्याय-

प्राबल्यं युक्तम्। न चैवं वेदोपक्रमाधिकरणविरोधः। नहि तत्रोपक्रमानुरोधेन स्वराणां वेदधर्मत्व [1]निश्चयः, किन्तु तस्य ऋगादिधर्मत्वे 'ऋच्यध्यूढं साम गीयते' इति वचनात् ऋगाधारगीतिरूपे साम्न्यप्युच्चैस्त्व 'मुच्चै ऋचा क्रियत' इत्यत एव सिध्यतीत्युच्चैः साम्ने'त्यस्य वैयर्थ्यापत्तेः पश्चात्तनतद्विध्यनुरोधेन। अत एव 'वेदो वा प्रायदर्शना'दिति सूत्रे प्राथम्यरूपप्रायदर्शनेऽपरितोषेण 'धर्मोपदेशाच्चे'ति सूत्रे इदमेव हेतूकृतम्।

किंचोपक्रमे वेदशब्दः 'त्रयो वेदा अजायंत अग्नेर्ऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात्सामवेदः 'इत्यभ्यस्तः। अभ्यासश्चोपसंहारादपि प्रबलः, बहुबाधस्यान्याय्यत्वादिति, तत एव निर्णयोस्तु। एवञ्च 'प्रायेवचनाच्चे' द० २-२-११ त्यादाविव सूत्रस्थप्रायशब्दस्य बाहुल्यमर्थो लभ्यत इति, न प्राथम्यं क्लिष्टतया तदर्थ इति कल्पनीयम्।

१. नियम इति मु० मु० पा०।

कल्पने'ति न्यायेन घृताघृतलक्षकत्वं वा घृतस्तुतेरेवाष्टकपालस्तुतेरेवाऽवयवद्वाराऽवयविद्वादशकपालस्तुतिपरत्ववत्, विशेषद्वारा सामान्यस्तुतिपरत्वम् वा स्यात्।

किञ्च 'पशुमालभेते'ति पशुशब्दश्च 'छागस्य वपाया मेदसोऽनुब्रूही'ति मन्त्रस्थछागशब्दात् विशेषपर इति षष्ठान्ते 'छागो वा मन्त्रवर्णादि'त्यत्रोक्तम्। न चात्र मन्त्रो विधिसमाहितहेतुप्ररोचनार्पकः, किन्तुः विधिवाक्यप्रापितकर्मसमवेतद्रव्यप्रकाशकत्वादुपसंहार एव तद्व्याख्यानरूपः। एतेनार्थवादानां विधिना पदैकवाक्यत्वात् 'गामानय शुक्लामि'त्यत्र गोशब्दस्य शुक्लव्यक्ताविवाञ्जनक्रियाक्षिप्तस्नेहनसमर्थद्रव्यसामान्यस्य पर्यवसानम्, उपसंहारस्य तु वाक्यरूपत्वान्न पदैकवाक्यतेति निरस्तम्। वाक्यैकवाक्यतापन्नमन्त्रादपि पशुविशेषे पशुशब्दपर्यवसानस्योक्तत्वात्।

ननु सन्दिग्धमुपक्रमस्थमक्ता इति पदमुपसंहारेण निर्णीयते केवलम्, ननु बाध्यते, अत एवोक्तं वार्तिके 'सन्देहमात्रं तत्र बाधितमि'ति। निश्चितमुपक्रमस्थन्तु नोपसंहारान्नीयते। अत एव वेदोपक्रमाधिकरणे उपक्रमस्थो निर्णीतः वेदशब्द उपसंहारस्थऋगादिशब्दानुसारान्न नीतः।

अतएव चाक्ताधिकरणे उपसंहारान्निर्णयः, वेदोपक्रमाधिकरणे तूपक्रमादिति तयोर्विरोध इति परास्तम्। अक्ताइत्युपक्रमस्योपसंहारविप्रतिपत्तिपर्यालोचनम् विनैव स्वत एव सन्दिग्धत्वेनानिर्णायकत्वात्। 'त्रयो वेदा' इत्युपक्रमस्य तूपसंहारविप्रतिपत्तिपर्यालोचनेन सन्दिग्धत्वेऽपि स्वतस्सन्दिग्धत्वाभावेन निर्णयकत्वात्।

अपि च[१] ऋचमधीतवानित्यादिलौकिकप्रयोगात् 'ऋग्भिः पूर्वाह्णे' इति वैदिकप्रयोगाच्च ऋगादिशब्दास्तद्वेदवाचका इति नात्रोपक्रमोपसंहारवैरूप्यमपि, येनात्रोपक्रमानुसारेण निर्णयः शंक्येत, तस्मान्न वेदोपक्रमाधिकरणविरोधः ।

## अश्वप्रतिग्रहेष्ट्यधिकरणविरोधपरिहारः

नाप्यश्वप्रतिग्रहेष्ट्यधिकरणविरोधः । तत्रापि नोपक्रमानुसारेण दातुरिष्टिरिति निर्णयः, किंतु कर्माङ्गत्ववशेन । तथाहि—अस्मादधिकरणात्पूर्वतने 'दोषात्त्विष्टिर्लौकिके स्यादि' मी० द० ३-४२८ त्यधिकरणे इयमिष्टिरश्वप्रतिग्रहवतः कर्मणोऽङ्गम्, न स्वतन्त्रेति स्थितम्। यदैवं स्थितम्, तदाऽङ्ग-प्रधानानामेकदेशकालकर्तृकत्व[२]न्यायात् यः क्रतोः कर्ता, तेनैवेयमपि कर्तव्येति सिध्यति। क्रतोः कर्ता 'स्वामिकर्मपरिक्रयकर्मणस्तदर्थत्वादि' मी० द० ३-८-१ ति न्यायात् । अश्वस्य दाता न प्रतिगृहीता, तस्मात्कर्माङ्गत्ववशेन निर्णयः, न तूपक्रमानुसारेण । कथमन्यथा मैत्रायणीशाखायां—स एष अश्वः प्रतिगृह्यते 'इति दात्रुपक्रमं विना आम्नातेयमिष्टिर्दातुरिति सिध्येत् ।

---

१. ऋग्वेदमधीतवनिति मु० पु० पा० ।

२. कर्तृकत्वापातान् वे. पाठ ।

अतएव वार्तिके—

'विधिस्तुल्योस्सदावृत्तिस्समानविषयेष्यते ।
तस्मादेकत्र सन्दिग्धमितरेणावधार्यते' ।

इत्युक्तमिति चेत् ।

न । अक्ता इत्यत्राप्यक्षादिशब्दवन्नानार्थशब्दाभावेनासन्देहात् । सामान्यनिश्चयेऽपि विशेषसन्देहस्तूपसंहारस्थघृतेऽपि समः, तत्रापि हि नवपुराणगव्यमाषिदिसन्देहसंभवात् ।

न च सामान्यशब्दस्य संकोचमात्रम्, न बाधः सामान्यस्य प्रतिव्यक्ति समाप्तत्वादिति वाच्यम् ।

शावरभाष्ये 'यद्वा सामान्यमादौ विशेषोयलक्षणार्थम्, यद्वा निगमने विशेषः सामान्यलक्षणार्थः, आरम्भ-निगमनयोः किं-समञ्जसम्, किंवा न समञ्जसमिति

उक्तं तंत्रसारे—

'मैत्रीयणीयशाखायां दात्रुपक्रमतोऽप्यृते ।
कर्मांगत्ववशादेव दातुरिष्टिः प्रतीयते' ।। इति

वार्तिककृतापि 'सा लिंगादार्विजे स्यादि'त्यधिकरणसिद्धांतसूत्रस्थ-लिंगपदं अंगस्य प्रधानेनैककर्तृकस्य सत एव यदुपकारजननसामर्थ्यम्, तत्परमिति व्याकृत्य, कर्मांगत्वेन दातुरिष्टिरिति निर्णयः कृतः ।

## अत्रार्थे गुरोरपि सम्मतिः

गुरुणाप्यधिकारान्तराकल्पनालाघवानुसारेण दातुरिष्टिरिति निर्णयः कृतः, नतूपक्रमाप्राबल्येन । यद्युपक्रमगतस्य दातुरिष्टिः स्यात्, तदा अश्वदानयुक्तपौंडरीकानुप्रवेशात्तत्फलेनैव फलवत्त्वमिति, अधिकारा-तरस्याकल्पनीयत्वात् लाघवम्, प्रतिग्रहीतुश्चेत् तस्य फलान्तरं कल्प-नीयमिति, गौरवं स्यात्—इति ।

---

१—यत्र लिंगं सामर्थ्यात्मकमवकल्पते । तत्रेति सूत्रार्थ इत्यादिग्रन्थेनेति शेषः तं. वा. ९६५ ।

वाक्याभ्याम्, शा. भा. सं. वा. यच्छ्रुतिवृत्तं तत् समञ्जसम्, न लक्षणावृत्त-मिति वार्तिकेन च सामान्यशब्दस्यविशेषलक्षकत्वरूपबाधोक्तेः । संकोचस्यापि बाधत्वाच्च । अन्यथा पदाहवनीयशास्त्रयोरपि बाध्यबाधकभावो न स्यात्,

तथा वाक्यप्रकरणाद्यधिकरणोक्तः प्रकरणादेर्वाक्यादिना संकोचोऽपि बाधः न स्यात् । 'यदाहवनीये जुहोती'ति वाक्यस्थजुहोतेरेकं पदहोमं त्यक्त्वा, इतरेषु बहुषु पर्यवसानमिति स्वल्पस्संकोचः । अक्ताशब्दस्येतरान् बहून् त्यक्त्वा एकस्मिन् घृते पर्यवसानमिति भूयान् संकोचः । आत्यन्तिकबाधस्तु ममाऽप्यनभिमतः ।

ननु तथापीहार्थवादस्य प्राबल्ये विशेषविषयत्वं हेतुः, न तूपसंहारत्वमिति चेत् । न । विशेषेणोपक्रम्य सामान्येनोपसंहारेऽपि व्याख्यानरूपोपसंहारानुसारेणो-पक्रमस्थविशेषशब्दस्य सामान्यपरतायाः विष्णुशर्मा भोज्यताम्, ब्राह्मणः प्रशस्तः इत्यादौ सिद्धत्वात् ।

'श्येनेनाभिचरन्नि'त्याद्युपक्रमस्य 'यथा वै श्येन' इत्यादिविशेषविषयोपसं-हारानुसरणदर्शनाच्च ।

यद्वा भाष्यकारांतरैरत्र प्रतिग्रहीतुरेवेयमिष्टिर्व्यवस्थापितेति वार्तिकादिषूक्तत्वात्। प्राभाकरैरपि पौण्डरीके श्रूयत इति कृत्वाचिन्त्येदमधिकरणम्, अन्यथा दातुरिष्टिरिति सिद्धान्तासिद्धिरिति वदद्भिः वस्तुतः प्रतिग्रहीतुरेवेयमिष्टिरित्याशयस्य स्फुटीकरणात्।

याज्ञिकैरपि तथैव स्वीकृतत्वाच्च प्रतिग्रहीतुरेवेयमिष्टिरस्तु। अतः न क्वापि परेषामुपक्रमप्राबल्यशङ्का। तेषामभ्युपसंहारप्राबल्यानुपगमे अक्ताधिकरणसिद्धांतनिर्वाहो न स्यात्।

## अक्ताधिकरणनिरूपणम्, तस्योपसंहारानुगुण्यञ्च

अक्ताधिकरणे हि 'अक्ताश्शर्करा उपदधाति, तेजो वै घृतमि'त्यत्र येन केन चिद्घृत-तैल-वसादीनामन्यतमेन द्रव्येणाञ्जनं कर्तव्यम्, विधौ विशेषाश्रवणादिति प्राप्ते, वाक्यशेषे घृतसंकीर्तनात्तेनैवेति सिद्धान्तितम्। इदमुपक्रमसंहारप्राबल्यानभ्युपगमे न निर्वहति। उपक्रमप्राबल्ये हि उपक्रमेऽञ्जनक्रियाक्षिप्तद्रवद्रव्यसामान्यानेश्चयाद्वाक्यशेषस्थस्य घृतपदस्य' गुणे त्वन्याय्यकल्पनेति न्यायात् घृताघृतलक्षकत्वम्, घृतस्तुतेरेवाष्टाकपालादिस्तुतेरवयवद्वाराऽवयविद्वादशकपालस्तुतौ पर्यवसानवद्विशेषवद्द्वारा सामान्यस्तुतौ पर्यवसानं वा कल्प्येत।

---

एतेनोपक्रमापेक्षितविशेषसमर्पक एवोपसंहारः, न तद्बाधक इति नयविवेकोक्तं परास्तम्, भाष्यविरोधात्। विशेषासन्निधिं त सामान्यस्यैवात्रापि वाससामान्यान्तर्भूतानियतविशेषोपादानेन पर्यवसानसंभवेऽपि क्षौमाख्यविशेषन्निधानात् सामान्यस्य नियतविशेषोपसंहारे संकोचलक्षण बाधस्यापरिहाराच्च, वासः शब्दस्य संबन्धिवाचक शब्दत्वाभावेन पदन्यायाविषयत्वाच्च। तस्मात् उपसंहारप्राबल्यादेवाक्ताधिकरणसिद्धान्तो वाच्यः।

एवं तद्व्यपदेशाधिकरणसिद्धान्तोऽपि। अन्यथा श्येनेनेत्युपक्रमस्य प्राबल्ये श्येनशब्दार्थस्य मुख्यार्थत्वात्, 'यथा वै श्येनो निपत्यदत्ते'इत्याद्युपसंहारः। अत्र यदुक्तं वार्तिके 'सर्वस्यापि शब्दस्य स्वार्थलंघने विरोधःकारणम्, स च प्रतियोनि दृष्टे ज्ञायते, न चोपक्रमदशायां विरोध्युपसंहारो ज्ञात इत्युपक्रमो मुख्यवृत्तिरेव, अथेदानीमुपरितन उपसंहारोमुख्यवृत्तिश्चेन्न संबध्यत इति बलाल्लक्षणां प्रतिपद्यत' इति।

तन्न। तथात्वे अक्ता इत्युपक्रमाबाधायोपसंहारस्य घृतादिशब्दे लक्षणा स्यात्। अपच्छेदादौ पूर्वदौर्बल्यञ्च न स्यात्। यदत्रोक्तं वार्तिके—

'विप्रतिपत्तौ विकल्पः स्यात्समत्वाद्गुणेत्वन्याय्यकल्पनैकदेशत्वादि' मी. द. ९-३-५ ति नावमिकाधिकरणे हि अग्निषोमीयपशौ श्रुतस्य 'अदितिः पाशान् प्रमुमोक्तित्व' मै. सं. १-२-१०३ ति मन्त्रस्य पाशबहुत्वानुसारेण बहूपशुकेषूत्कर्षे प्राप्ते प्रधानस्य प्रातिपदिकार्थस्य पाशस्य, विभक्त्यर्थस्य कर्मकारकस्य च प्रकृते संभवात् गुणभूतायास्तद्बहुत्वसंख्यायास्तत्रासंभवेपि, गुणानुसारेण नोत्कर्षो युक्त इति कथंचित्पाशावयवबहुत्वाभिप्रायेण, छांदसतया वा बहूवचनं नेतव्यमित्युक्तम् ।

## वैश्वानराधिकरणस्योपसंहारानुगुण्यम्

तथा 'पूर्ववन्तोऽविधानार्थाः' मी० द० १-४-१५ इति प्रमाणलक्षणाधिकरणे 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते, यदष्टाकपालो भवति, गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालः, त्रिवृतैवास्मिंस्तेजो दधाति, यद्दशकपालः, विराजैवास्मिन्नन्नाद्यं दधाति, यदेकादशकपालः, त्रिष्टुभैवास्मिन्निन्द्रियं दधाति, यद् द्वादशकपालः, जगत्यैवास्मिन्पशून् दधाति; यस्मिञ्जात एतामिष्टिन्निर्वपति, पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवती' तै० सं० २-२-५-३ ति जातेष्टिविधावष्टाकपालादिशब्दाः किं जातेष्टि-

---

'पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम् ।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्' ॥

यत्र भिन्नवाक्यगताः परस्परसापेक्षा विरोधिनोऽर्थाः श्रूयन्ते। तत्र पूर्वस्योत्तरानुपमर्देनैव लब्धात्मकात्, उत्तरस्य च पूर्वोपमर्देन विनाऽऽत्मलाभानुपपत्तेः परबलीयस्त्वम् । अपच्छेदशास्त्रद्वयञ्च परस्परनिरपेक्षमिति, तत्र परबलीयस्त्वम् । यत्रत्वेकवाक्यतया परस्परापेक्षाणां श्रवणम्, न तत्रैतत् भवति । तत्र ह्याकांक्षावशेनैकवाक्यत्वे पूर्वप्रतीतश्चार्थः उत्तरमर्थं स्वानुगुणमेवाकांक्षत इत्युपक्रमानुगुणार्थपर उपसंहारः, अननुगुणं ह्यनपेक्षितत्वान्नैवास्मिन् वाक्ये अस्ति, न चाविद्यमानेन पूर्वबाधः शक्य इति पूर्वबलीयस्त्वम्, एवञ्च 'त्रयो वेदाः, प्रजापतिर्वरुणायाश्वमि'त्युपक्रमस्योच्चैरृचा, यावतोऽश्वानित्युपसंहारेणैकवाक्यत्वादत्र पूर्वबलीयस्त्वमिति ।

तन्न, पूर्वप्रतीत इत्यत्र हि पूर्वप्रतीतः कःविवक्षितः किमुपक्रमादापातप्रतिपन्नः, किं वा परामृष्ट उपसंहारानुगुणः । नाद्यः । 'श्येनेनाभिचरन् यजेते'त्यादौ पूर्वप्रतीतपक्ष्यादिरूपमुख्यार्थानुगुण्यायोत्तरस्य 'यथा वै श्येन इत्यादौ स्वारस्यं स्यादि-

माश्रित्य ब्रह्मवर्चसादिफलोद्देशेन गुणविधायकाः, उत द्वादशकपालस्तुत्यर्था अर्थवादा इति संशय्य, द्वादशसु कपालेषु संस्कृतस्य पुरोडाशस्य द्वादशकपालशब्दाभिधेयस्य विहितस्याष्टाकपालादिशब्दैर्ग्रहणासंभवेन स्तुत्ययोगात् अष्टाकपालादिशब्दार्थस्याष्टाकपालादिसंस्कृतपुरोडशस्याविहितत्वेन स्तुत्ययोगाच्चार्थवादत्वासंभवेन गुणफलविधय इति पूर्वपक्षे प्राप्ते, 'वैश्वानरं द्वादशकपालं निर्वपेदि'त्युपक्रांताया इष्टे'र्यस्मिन्जाते' इत्यादिना उपसंह्रियमाणतया उपक्रमोपसंहारैकरूप्यावगमितप्रधानभूतैकवाक्यत्वभंगप्रसंगान्न मध्ये गुणविधयो युक्ताः। कथंचिदष्टसंख्यावयवद्वाराऽवयविद्वादशकपालस्तुत्यर्था एते अर्थवादा इत्युक्तम्।

## अक्ताधिकरणस्योपसंहारप्राबल्यगमकत्वे आक्षेपः, समाधानञ्च

ननु 'संदिग्धेषु वाक्यशेषादि'त्यक्ताधिकरणे 'अक्ताः शर्करा' इत्युपक्रमगतं संदिग्धमक्तपदं वाक्यशेषगतेन घृतपदेन निर्णीयते, न तु बाध्यत इति चेत्। न। अक्षादिपदवन्नानार्थत्वाभावेनार्थसंदेहाभावाद्विशेषसंदेहस्य घृतेपि नवपुराणदित्वादिविशेषसंभवेन तादवस्थ्यात्। ननु तथापि सामान्यस्य विशेषपर्यवसानौ[1]चित्याद्विशेषविषयत्वादिहार्थवादानुसरणम्, नतूपसंहारत्वादिति चेत्। न। विशेषस्यापि सामान्योपलक्षकत्वसंभवेन सामान्यस्य

---

त्युक्तत्वात्, द्वितीये कथमुपसंहारप्राबल्यम्। प्रत्युत यत्र भिन्नवाक्यगतता, तत्रोत्तरस्य पूर्वव्याख्यानरूपत्वात् प्राबल्यं न सिद्धयति, अन्यथा व्रीहि—यवशास्त्रयोरपि परं प्रबलं स्यात्। अपच्छेदद्वये पूर्वापच्छेदनिमित्तप्रायश्चित्तानुष्ठानन्तु वटफले रक्तस्वरूपसामान्याश्यामरूपापनयपूर्वकं रक्तताया इवोत्तरापच्छेदेन पूर्वापच्छेदनिमित्तकप्रायश्चित्तकर्तव्यतापनयपूर्वकं स्वनिमित्तप्रायश्चित्तकर्तव्यतायाः उत्पादनात्। विस्तृतञ्चैतन्न्यायामृते प्रत्यक्षप्राबल्योक्तिप्रस्तावे।

अनुपसञ्जातविरोधित्वेनोपक्रमप्राबल्ये च सर्वत्रापातजप्रत्ययस्यैव प्राबल्यापत्त्या बहुविप्लवापत्तिः। तस्य विमर्शजेन मिथ्यात्वे, उपक्रममात्रजन्योऽप्युपसंहारपरामर्शजन्येन मिथ्याऽस्तु। उपक्रमोपसंहारयोरेकवाक्यतया संभूय प्रमापकत्वात्। उपसंहारस्य व्याख्यानरूपत्वात्। 'सा वैश्वदेव्यामिक्षे'त्यादावुत्पत्तिशिष्टगुणावरुद्धे'वाजिभ्यो वाजिनमि'त्युत्पन्नशिष्टगुणाप्रवेशे तूत्पत्तिशिष्टस्य न प्राथम्यम्

1. पर्यवसाननैयत्यात् क पु पा।

विशेषपर्यवसाननियमाभावद्विशेषेणोपक्रम्य सामान्येनोपसंहारेपि उपसंहारानुसारेणोपक्रमस्थस्य विशेषशब्दस्य सामान्यपरतायाः 'विष्णुशर्मा भोज्यताम्, ब्राह्मणः प्रशस्त' इत्यादौ सिद्धत्वाच्च। ननु सामान्यशब्दस्योपसंहारानुसारेण संकोचमात्रम्, न तु बाध इति चेत्। न। संकोचस्याप्येकदेशबाधत्वात्। अन्यथा पदशास्त्रेणाहवनीयशास्त्रस्य, वाक्यादिना प्रकरणादेश्च संकोचो बाधो न स्यात्।

नन्वक्ताः शर्कराः उपदधाती'ति वर्तमानापदेशेनाप्रत्यक्षस्य विधेःस्तुत्योन्नेयत्वादुपजीव्यस्तुतिसमर्पकतया इहार्थवादोऽनुसृतः, नतूपसंहारत्वादिति चेत्। न। आख्यातश्रवणकाले वर्तमानोपधानाभावेन पंचमलकारकल्पनया 'वसंताय कपिंजलानालभते' इति निरर्थवादवाक्य इव स्तुतिमनपेक्ष्यैव विधिसिद्धेः। 'इमां पृष्ठ्वोद्गायेत्, इमां हि औदुंबरीं विश्वा भूतान्युपजीवंती'ति विषयवाक्यांतरे लिङ एव श्रवणाच्च। ननु शब्दभावनेतिकर्तव्यतारूपां प्ररोचनां विना प्रवर्तकस्य विधेरपर्यवसानाद्विधिना स्वसमाप्त्यर्थमपेक्षितत्वादिहार्थवादोऽनुसृतः, न तूपसंहारस्थात्वादिति चेत्। न। उपक्रमस्य प्राबल्ये गुणभूतार्थवादस्थघृतशब्दस्य घृताघृतलक्षकत्वादिना स्तुतिपरत्वकल्पनेनैव निर्वहणीयत्वप्रसंगात्। तस्मात्प्रकारांतराभावात् उपसंहारप्राबल्यादेवाक्ताधिकरणसिद्धांतो निर्वाह्यः।

---

हेतुः। किन्तूत्पत्तिवाक्येऽवगतगुणं कर्मानूद्यान्येन गुणस्य विधेयत्वात्, सगुणस्य कर्मणः गुणान्तरनैराकांक्ष्येण गुणान्तरस्य पूर्वकर्मसंयोगानर्हत्वं हेतुः।

अत एव गुणाधिकरणे सूत्रम्। 'गुणश्चापूर्वसंयोगे वाक्ययोस्समत्वात्' इति। वार्तिकञ्च—

'उत्पत्तिवाक्यविज्ञातं कर्म सर्वमनूद्यते।
न चाश्रितगुणे शक्यं तद्विरोधि गुणान्तरमि' ॥ ति

न चात्रोपक्रमोपसंहारयोरिव व्याख्यानव्याख्येयभावोऽस्ति, श्रुतिलिंगयोर्बलाबलेऽपि न प्रथम-चरमोपस्थिती हेतुः, किन्तूपस्थित्यनन्तरं सह प्रस्थितयोरपि तयोः शीघ्रमन्थरप्रवृत्तित्वेन प्रमेयपरिच्छेदे सन्निकर्ष-विप्रकर्षौ। एवं लिंगवाक्यादेरपि। अतएव जैमिनिसूत्रम्। 'अर्थविप्रकर्षादि' ति।

---

वार्तिकञ्च 'ऐन्द्रीविनियोगं प्रति श्रुतिलिंगयोस्सहप्रस्थितयोरि'तं.वा.३८त्यादि।

---

नैवमुपक्रमोपसंहारयोस्सहप्रस्थितयोरर्थपरिच्छेदे सन्निकर्षविप्रकर्षै स्तः। प्रस्थानानान्तरं द्वयोरपि शब्दरूपत्वेन तुल्यगामित्वात् प्रथमोपस्थितस्याप्युपक्रमस्योपसंहार-

## उपसंहारप्राबल्ये छागपशुन्यायः

तथा—षष्ठे 'पशुचोदनायामनियमोऽविशेषादि' मी० द० ६-८-३० त्यधिकरणे 'यदग्नीषोमीयं पशुमालभेत 'इति विधौ विशेषाश्रवणाद्यः कश्चित्पशुरालब्धव्य इति प्राप्ते,' 'छागस्य वपाया मेदसोऽनुब्रूही' तै० ब्रा० ३-६-८ ति मंत्रे छागरूपविशेषश्रवणात् स एवालब्धव्य इति विधिप्रापितकर्मसमवेतद्रव्यप्रकाशकतया तदुपसंहारभूतमंत्रानुसारेण सिद्धांतोप्युपसंहारप्रबल्येन निर्वाह्यः। उपक्रमप्राबल्ये विधौ पशुसामान्यस्यालब्धव्यत्वनिश्चयात् तदनुसारेणोपसंहारमंत्रस्थछागशब्दस्यापि तत्सामान्योपलक्षणत्वप्रसंगात्।

## तद्व्यपदेशाधिकरणस्योपन्यासः

तद्व्यपदेशाधिकरणे 'श्येनेनाभिचरन् यजेते'ति विधौ श्येनशब्दमुख्यार्थत्वाय श्येनद्रव्यको यागः कर्तव्य इति प्राप्ते, 'यथा वै श्येनः निपत्यादत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते' इति वाक्यशेषे मुख्यश्येनेऽसंभवतः श्येनसादृश्यस्य वर्णनानुरोधेन श्येनशब्दस्य याग एव गौणी वृत्तिरिति वाक्यशेषानुसारेण सिद्धांतोऽप्युपसंहारप्राबल्येन निर्वाह्यः। उपक्रमप्राबल्ये तत्स्थश्येनशब्दमुख्यार्थानुरोधेन वाक्यशेषस्य

'राम-रावणयोर्युद्धं रामरावणयोरिवे'

तिवत्कथंचिद्भेदेपि सादृश्यपरत्वमिति वर्णनप्रसंगात्।

---

सापेक्षस्यैवार्थपरिच्छेदकतया तन्निरपेक्षस्याप्रस्थानाच्च। लिंगादेः श्रुत्यादिकल्पनादिनैव प्रामाण्यवत् उपसंहारस्योपक्रमकल्पनादिनैव प्रामाण्याभावाच्च।

'कपिञ्जलानालभत' इत्यत्रापि बहुत्वे प्रथमस्य त्रित्वस्य कारणाभावादनतिक्रमः। उपक्रमस्य तु प्रथमस्यापि व्याख्यानरूपोपसंहारात्मककारणादतिक्रमः, अत एव कपिञ्जलाधिकरणे सूत्रम् 'प्रथमं वा नियम्येत कारणादतिक्रमस्स्यादिति।

अनुव्याख्यानञ्च—

'विपरीतप्रमाभावे पूर्वारोहस्तु कारणम्।
सा भवेद्यत्र स व्यर्थः पूर्वारोहो भ्रमो यथे' ॥ ति

तस्मात् पूर्वोपमर्दनोत्पत्तेः स्वविरोध्युत्तरोज्झितेः
व्याख्यानरूपतश्चोपक्रमाच्छ्रेष्ठोपसंहृतिः ॥

## चातुर्थिकजातेष्ट्यधिकरणस्योपन्यासः

तथा—चतुर्थं 'फलसंबन्ध'स्त्वचोदिते न स्यात् तस्याशेषभूतत्वादि' मी० द० ४-३-३८ त्यधिकरणे जातेष्टेः 'पूत एव स तेजस्वी'त्यादिवाक्यशेषोक्तं फलमिष्टिकर्तुः पितुरेव, न पुत्रस्य, अन्यगामिफले कर्मणि अन्यस्य प्रेरणानुपपत्तेरिति प्राप्ते, येन वाक्यशेषेण फलमेतदुपनीयतं, तेन पुत्रगतमेवोपनीयत इति वचनप्रामाण्यात् पुत्रस्यैव फलमिति सिद्धान्तोऽप्युपसंहारप्राबल्येनैव निर्वाह्यः। अन्यथोपक्रमे 'पुत्रे जाते' इत्यसंवलितनैमित्तिकाधिकारतया प्रतीतायास्तस्या वाक्यशेषानुसारेण पुत्रगतपूतत्वादिफलकामसंवलिताधिकारस्याप्राप्तेः[२]। तदा हि वाक्यशेषोऽर्थवादमात्रमेव स्यात्।

किंचोपक्रमप्राबल्यवादे किमुपक्रमे प्रतीतमात्रस्य ग्राह्यत्वम्, किं वा उपसंहारपरामर्शेन व्यवस्थितस्य? आद्ये श्येनादिवाक्ये पक्ष्यादेर्ग्राह्यत्वापत्तिः। द्वितीये उपसंहारस्यैव प्राबल्यं सिध्येदिति—पूर्वःपक्षः।

## सिद्धान्तोपक्रमः, व्याख्यानरूपत्वप्रथमहेतोर्निरासः

[३]अत्र ब्रूमः—यत्तावदुपसंहारप्राबल्ये कारणमुक्तं व्याख्यानरूपत्वम्[१], तन्न। तत्र किं व्याख्येयपदोपादानेन स्पष्टं व्याख्यानरूपत्वमित्याशयः, उत परस्परविरोधपरिहाराय कल्प्यमिति। नाद्यः, [२]असिद्धेः। द्वितीये प्रथमश्रुन-

---

अपच्छेदनयेन परैर्निर्गुणवाक्यानां चरमत्वात् शंकिते प्राबल्ये, 'वेदो वा प्रायदर्शनादि'ति नयात् प्राथम्यात् सगुणवाक्यानां प्राबल्यमित्यस्मदीयानामुक्तिस्तु पररीत्याश्रयणेन वा, सगुण–निर्गुणशास्त्रयोरुपक्रमोपसंहारत्वाभावेन उपसंहारन्यायप्राबल्यन्यायाविषयत्वाभिप्रायेण वा नेया- तं. तर्क २७२-३०७.इति अयमेवार्थश्चन्द्रिकायां सोदाहरणं, पूर्वपूर्वापेक्षयोत्तरोत्तरस्य प्राबल्यमुक्तः। विस्तरभिया चन्द्रिकायास्सन्दर्भो नोट्टंकित इति ध्येयम्।

१—संयोग मु. पा.।

२—अधिकारेति मु. पु. नास्ति। ३—सपरिकरमुपपादितं चन्द्रिकाकृतो मतम् निरस्यति स्वराद्धान्तवर्णनमुखेन 'अत्र ब्रूमः' इत्यादिना। २—अप्रसिद्धेरिति मु. पु. पा.।

स्यैव चरमश्रुतव्याख्यानरूपत्वं किमिति न कल्प्यते, यतः उपक्रमप्राबल्यं न स्यात्। पाश्चात्यभागस्यैव व्याख्यानत्वमिति नियमस्त्वसिद्धः, प्रमाणाभावात्। व्याख्येयोपस्थितिसापेक्षत्वाद्व्याख्यानप्रवृत्तेः, तस्य पाश्चात्यत्वम् नियतमिति चेत्। न। पाश्चात्यभागश्रवणानंतरमन्यतरस्य व्याख्यानरूपत्वकल्पकं विरोधप्रतिसन्धानं यदाऽवतरति, तदा विरोधप्रतियोगित्वेन भागद्वयस्याप्युपस्थितत्वाविशेषेण प्रथमभागस्यापि पाश्चात्यभागव्याख्यानरूपत्वकल्पनोपपत्तेः। लोके 'पुंगवं पश्य, विदेवनायाक्षमानये'त्यादौ[१] प्रथमश्रुतस्यापि चरमश्रुतव्याख्यानरूपत्वदर्शनात्। व्याकरणे च वृद्धिरादैजित्यादेः सिचि वृद्धिरित्यादौ (परस्मैपद. पा. ७–२–१) चरमश्रुतसूत्रस्थवृद्ध्यादिपदव्याख्यानरूपत्वदर्शनात्। तस्मात्परस्परविरोधस्थले परस्परव्याख्यानरूपत्वकल्पनमप्रमाणमिति, नोपसंहारप्राबल्ये व्याख्यानरूपत्वं कारणम्।

## द्वितीयहेतोःपरत्वस्य प्राबल्यकारणत्वनिरासः।

[१]यच्च तत्र परत्वरूपकारणमुक्तं पूर्वोपमर्देन परस्योत्पत्तिरिति। तदपि तुच्छम्। यदि हि परमुत्पद्येत, तर्ह्येव तस्य पूर्वोमपर्देन उत्पत्तिरिति स्यात्, न त्वत्र तस्योत्पत्तिः संभवति। तथाहि—किमत्रोपक्रमबाधकत्वेनाभिमतमुपसंहारार्थगोचरज्ञानमुपक्रमार्थान्वितस्वार्थगोचरमुपेयते[१], तदनन्वितस्वार्थगोचरं वा? नाद्यः—परस्परविरुद्धार्थयोरुपक्रमोपसंहारयोरन्यतरस्य लक्षणया विरोधसमाधानात्प्राक् संभूयकारित्वासंभवेन तदयोगात्, उपक्रमस्य लक्षणाऽभ्युपगम्यत इति चेत्। न। उपक्रमबाधकत्वाभिमतोपसंहारार्थविषयज्ञानोदयात् प्रागुपक्रमप्रतीतार्थपरित्यागे कारणाभावेन तल्लक्षणाकल्पनस्य तद्बाधकत्वाभिमतज्ञानोदयस्य च परस्पराश्रयग्रस्तत्वेनैकस्याप्यसंभवात्।

न द्वितीयः। एकस्मिन्वाक्ये [१]पूर्वपूर्वभागार्थप्रतीत्यनंतरमुत्तरोत्तरभागस्य पूर्वपूर्वभागार्थान्वितस्वार्थबोधकस्यैव व्युत्पत्तिसिद्धतया तदन्वितोपसंहारार्थविषयज्ञानासंभवात्। तथा व्युत्पत्तिनियमाभ्युपगमेपि उपक्रमोपसंहारयोर्विध्यर्थवादत्वादिरूपेणैकवाक्यत्वमनुसंदधतामुपक्रमैकवाक्यत्वानुपपत्त्या उपसंहारस्य लक्षणाकल्पनां विना स्वमुख्यार्थबोधासंभवात्।

---

१—पूर्वपूर्वेत्यादि उत्तरोत्तरभागस्येत्यन्तं मु. पु. नास्ति।

## उपक्रमस्योपसंहारतुल्यतानिरासः ।

उपक्रमस्याप्युपसंहारैकवाक्यत्वानुपपत्तिस्तुल्येति चेत् ? सत्यम् । उपक्रमदशायामुपसंहारो विरोधी नोपस्थित इति, तदेकवाक्यत्वानुपपत्तिः स्वरूपसती न प्रतिबन्धिका, इह तु ज्ञाताऽनुपपत्तिः प्रतिबन्धिकेति विशेषः । उपसंहारादप्युपक्रमैकवाक्यत्वमननुसंदधतां मुख्यार्थबोधः संभवतीति चेत् । न। तथाप्युपक्रमैकवाक्यत्वे उपसंहारादर्थप्रत्ययकाले वेदपाठक्रमानुसारेण नियमतोऽनुसंधातुं योग्ये विद्यमाने उपक्रमाश्रवण-तदर्थानवगम-तद्भिन्न-वाक्यत्वभ्रमात्पुरुषदोषमात्रेणाननुसंधीयमाने संभवतः तस्मिन्ननुसन्धीय-मानेऽसंभवतः प्रत्ययस्यापातजप्रत्ययत्वेन तस्योपक्रमबाधकत्वायोगात्। अन्यथा परप्राबल्येप्युपक्रमस्य पूर्वत्वमननुसंदधतां पश्चाच्छ्रुतात् तस्मा-त्प्रथमश्रुतोपसंहारैकवाक्यत्वाननुसंधानेन जातस्य ज्ञानस्योपसंहारबाध-कत्वापत्त्या, उन्मत्तकेलिप्रसंगात्[2] । न ह्युद्गातृ-प्रतिहर्त्रपच्छेदयोरिवोप-क्रमोपसंहारयोर्यदा यः पश्चादुपस्थितः, तदा तेन तत्पूर्वस्य बाध इत्यनियतः बाध्यबाधकभावः परेणाप्यंगीक्रियते । अतो नात्र परप्राबल्यन्यायावतारः । किंतु यत्रापच्छेदादौ वस्तुतोऽप्येकवाक्यत्वाभावात् तदनुपपत्त्यभावेन परम् निर्दुष्टं[3] ज्ञानमुत्पद्यते, तत्रैव तस्य परत्वेन पूर्वबाधकत्वम् । यत्र त्वेक-वाक्यत्वम्, तत्र वेदपाठक्रमानुसारेण प्रथमोपस्थितोपक्रमार्थज्ञानानंतरम् तदेकवाक्यतयोपनिपतन्नुपसंहारः तद्विरुद्धार्थश्चेन्न मुख्यार्थतया तेनान्वेतुम् युक्त इति लक्षणाकल्पनापूर्वकं तदेकवाक्यतयैव तस्यार्थबोधकत्वम्, न तु तद्विसंप्रतिपत्त्योपक्रमाननुसंधाने, तद्विसंप्रतिपत्त्या बोधकत्वसंभवेऽपि तदानींतनज्ञानं दोषजन्यमापातजप्रत्ययरूपमेवेति तद्विरुद्धनिर्दोषज्ञानो-दयाभावात्, न तस्य परत्वेन बाधकत्वशंका ।

## उपक्रमप्राबल्ये सर्वत्र विमर्शवैयर्थ्यदूषणपरिहारः

एतेनोपक्रमप्राबल्ये आपातजप्रत्ययस्यैव सर्वत्र प्राबल्यापत्त्या विमर्श-वैयर्थ्यापत्तिरित्यपि परास्तम् । पूर्वेण परमुत्पत्तिप्रतिबंधेन हि बाधनीयम् ।

---

१—चिदेवनाक्षमिति ख. पु. ।

२—उन्मत्तकोक्तिप्रसंगादिति मु. पु. पा. । ३—निर्दोषमिति मु. पु. पा. ।

नचोपसंहारार्थप्रत्यये उपक्रमैकवाक्यत्वानुपपत्तिवत् श्येनादिवाक्यादापातज-प्रत्ययानन्तरं न्यायानुगृहीतवाक्यर्थ[1]ज्ञानोत्पत्तौ किञ्चित्प्रतिबंधकमस्ति। ततश्च न्यायेन निरुपपत्तिकं पूर्वप्रत्ययं तिरस्कुर्वत्परमुत्पद्यत इति, 'न पूर्व-प्राबल्ये एतादृशशंकावकाशः।

## परप्राबल्यवादेऽपि तद्बाधोपपत्तिः।

किंच परप्राबल्यवादेऽपि न्यायानुगृहीतवाक्यार्थज्ञानानन्तरं न्याया-भासक्षुभितचित्तस्य तदेवापातजज्ञानं पुनरपि संभवतीति, तेन तस्य बाधः किं न स्यात्। न च तत्रापि बाधाभिमान इष्ट इति वाच्यम्, वस्तुतो बाध-प्रयोजके परत्वे सति तेनैव भाव्यतया अभिमानमात्रेणाचरितार्थत्वात्। सन्न्यायोपबृंहितवाक्यर्थज्ञानस्य तद्विरोधि ज्ञानं परत्वेपि[2] न बाधकमिति-चेत्। पूर्वत्वेप्येवं वक्तुं शक्यमिति किमिति नावबुध्यसे ?

यत्तूपक्रमाधिकरणे उपक्रमप्राबल्यमनपेक्ष्य न्यायान्तरेण स्वराणाम् वेदधर्मत्वनिर्णय इत्युक्तम्, तत्र न तावदृगादिधर्मत्वे 'उच्चैः साम्ने'त्यस्य वैयर्थ्यापत्तेस्तेषां वेदधर्मत्वनिर्णय इति युक्तम्। ऋगनध्यारूढेषु स्तोभा-क्षरनिर्वर्त्यगीतिभागेषूच्चैस्त्वसिद्ध्यर्थतया तस्य सार्थकत्वात्।

## उच्चैस्साम्नेत्यस्य सार्थक्यमुपेत्यापि मीमांसकमतविरोधशंका।

ननु पूर्वपद्युपपादितरीत्या ऋचामुच्चकैस्त्वे तदारूढे साम्नि स्वरान्तरम् कर्तुं न शक्यत इति, ततः साम्नि उच्चैस्त्वसिद्धिरुच्यते चेत्, तदनध्यारूढेषु स्तोभगीतिभागेषु स्वरान्तरस्य कर्तुं शक्यतया[3] तत्प्रसक्तौ तेषूच्चैस्त्वनियम-सिद्ध्यर्थत्वेन 'उच्चैः साम्ने'त्यस्य सार्थकत्वं स्यादिति दूषणं भवतु नाम। मीमांसकमर्यादया तु न भविष्यति, 'उच्चैर्ऋचा क्रियते' इति ऋक्करणक-भावनायां विधीयमानस्योच्चैस्त्वस्य 'उच्चैः प्रवर्ग्येण चरंती'ति प्रवर्ग्य-करणकभावनायां विधीयमानस्येवाङ्गप्रधानार्थतयाऽक्षराभिव्यक्तिद्वारा

१—उपपत्ताविति ख.पु.पा.

२—परमपीति ख.पु.पा.

३— अशक्यतयेति पा.

ऋगंगे साम्नीव गीतिकालपरिच्छेदकत्वेन[1] तदंगेषु स्तोमगीतिभागेष्वपि तत एवोच्चैष्ट्वलाभात् ।

## उच्चैस्साम्नेत्यस्य सार्थक्योपपादनम्

[2]सत्यम्—एवमपि प्रजापतेर्हृदयादिसामसु ऋगनङ्गेषु 'उच्चैः साम्ने'त्यस्य सार्थकत्वं न निवार्यते, प्रजापतेर्हृदयादि ज्योतिष्टोमे नास्तीति चेत् । मा भूत् । यत्रास्ति, तत्र सार्थक्यं भविष्यति । तथा सति प्रकरणादुत्कर्षः स्यादिति चेत् । तत् किं सिद्धांते नास्ति तत उत्कर्षः । अवश्यं हि तस्य सिद्धांतेऽप्युत्कर्षः वाच्यः । ज्योतिष्टोमस्य 'भूयस्त्वेनोभयश्रुति' मी. द. ३. ३. १० । इत्यधिकरणे याजुर्वैदिकत्वव्यवस्थापनेन तदंगानां केषांचित्सामवेदविहितत्वेऽपि वेदांतरविहितानामंगानां सांगप्रधानविधायकप्रधानवेदस्वर एव, नांगवेदस्वर इति 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' मी. द. ३.३.९ इत्यधिकरणे व्यवस्थापनेन च ज्योतिष्टोमं तदंगेषु सामवेदस्वरस्य निरवकाशत्वात् । त्रयाणामपि वेदस्वरविधीनां प्रकरणाद्बलीयोभिर्वाक्यैस्तत्तद्वेदविहितसकलकर्मविषयत्वमभ्युपगम्यैव गुणमुख्यव्यतिक्रमाधिकरणे याजुर्वैदिकाधानाङ्गस्य सामवेदोत्पन्नस्य वारवंतीयसाम्नः प्रधानवेदस्वर एव, नोत्पत्तिवेदस्वर इति निर्णीतत्वाच्च ।

## स्वरविधीनामनुत्कर्षोपपत्तिः ।

अपि च [2]स्वरविधीनामृगादिधर्मत्वपक्षे 'उच्चैस्साम्ने'त्यस्यानुत्कर्षोऽपि वक्तुं शक्यः, 'प्रजापतेर्हृदयेनापि पक्षं प्रत्युपतिष्ठत' इत्यग्नौ श्रवणात्, अग्नेश्च प्रकृतौ ज्योतिष्टोमेपि सद्भावस्य दाशमिके 'अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिरि' मी. द. १०-२४ त्यधिकरणे समर्थितत्वात् । ननु च प्रजापतेर्हृदयादिमात्रविषयत्वे 'उच्चैः साम्ने'ति स्वरविधानमल्पविषयमनर्थकप्राय स्यात् । अत एव प्रजापतेर्हृदयादिविषयत्वे इदमेव दूषणम् वार्तिके दर्शितमिति चेत् । न । वेदधर्मत्वपक्षेऽपि त्रयाणामपि स्वरविधीनाम् वाचनिकस्वरांतरविधानादिविषयपरिहारेण प्रवर्तमानानामल्पविषयत्वस्य वार्तिक एवोक्तत्वात् । तस्मादस्मिन्नेवाधिकरणे उपक्रमप्राबल्यमेव मूलयुक्तिः, धर्मोपदेशादित्यभ्युच्चयमात्रमिति दर्शयितुमेव वार्तिके प्रजापतेर्हृदयादिविषयत्वेन सार्थक्त्वशंकामुद्भाट्य, तत्र तात्कालिकं समाधाना-

---

१—परिपूरकत्वेनेति मु. पु. पा । २—स्वरादिविधीनामिति ख. पु. पा. ।

भासं प्रदर्श्य, तदाभासचत्वमपि अग्रे स्वयमेवाविष्कृतम्। तस्माद्धर्मोपदेशादित्यभ्युच्चय इति, ततो वेदधर्मत्वनिर्णय इति न युक्तम्।

## अभ्यासाद्वेदधर्मत्वमित्यस्य निरासः

[1]नाप्यभ्यासात्तन्निर्णय इति युक्तम्। बहुबाधस्याऽन्याय्यत्वादिति हि तत्र मूलम्। नचाभ्यस्तवेदशब्दार्थबाधे बहुबाधः। चतुर्णामेव हि वेदशब्दानाम् तदा लक्षणा स्यात्। ऋगादिशब्दार्थबाधे तु 'अग्नेर्ऋग्वेदः' इत्यादौ, 'उच्चैः ऋचा क्रियते' इत्यादौ च श्रुतानां षण्णां ऋगादिशब्दानां लक्षणेति, तत्रैव बहुबाधःस्यादिति, नात्राभ्यासप्राबल्यम्। वेदशब्दार्थाबाधे हि 'अग्नेः ऋग्वेद' इत्यादावपि ऋगादिशब्दार्थबाध आवश्यकः। भिन्नार्थयोः सामानाधिकरण्यस्यान्यतरलक्षणया समर्थनीयत्वात्।

किं 'चाग्नेर्ऋग्वेदः' इत्यादौ, तस्मा'दुच्चैर्ऋचा क्रियते' इत्यादौ च ऋगादिशब्दस्याप्यस्त्यभ्यासः। न च वेदशब्दश्चतुर्वारमावर्तितः, ऋगादिशब्दास्तु द्विवारमिति ऋगादिशब्दाभ्यासाद्वेदशब्दाभ्यासो गरीयानिति वाच्यम्। उच्चैस्त्वमृग्धर्मः, वेदविशेषधर्मो वा, उपांशुत्वं यजुर्धर्मः, वेदविशेषधर्मो वा, उच्चैस्त्वं सामधर्मो वा वेदविशेषधर्मोवेति उपांशुत्वादित्रयसंन्देहत्रयापाकरणाय प्रत्येकं वेदशब्दाभ्यासे वक्तव्ये 'त्रयो वेदा अजायंते'ति साधारणोपक्रमगत एकः, तत्तदृगादिशब्दसमानाधिकृत एक इति, प्रत्येकम् वेदशब्दद्वयस्यैव संभवेन साम्यात्। यजुरादिशब्दसमानाधिकृतवेदशब्दस्य भिन्नविषयस्य ऋगादिशब्दार्थनिर्णयेऽनुपयोगात। तस्मान्नाभ्यासाद्वेदधर्मत्वनिर्णयः शक्यः कर्तुमिति, 'सूत्रस्थप्रायशब्दस्य बाहुल्यार्थः भाष्यकारादिभिर्न स्पृष्टः।

## ऋगादिशब्दानां वेदवाचित्वपूर्वपक्षनिरासः।

यत्तु—ऋगादिशब्दानामपि वेदवाचकत्वादुच्चैस्त्वादीनाम् वेदधर्मत्वनिर्णय इत्युक्तम्, तत्तुच्छम्। 'तेषां ऋग्यत्रार्थवशेन पादव्यवस्थे मी. द. २-१-३५ त्यादिशब्दार्थनिर्णयायाभियुक्तानादवृद्धव्यवहारानुसारेण 'ऋच एव मधुकृतः, ऋग्वेद एव पुष्पम्', यजूंष्येव मधुकृतः,

१—उच्चैस्त्वादिनामभ्यासादेव वेदधर्मत्वमिति व्यासतीर्थमतं निरस्यति—नापीति।

यजुर्वेद एव पुष्पम्', 'सामान्येव मधुकृतः, सामवेद एव पुष्पमि'त्यादि-वैदिकप्रयोगानुसारेण च ऋगादिशब्दानां मंत्रविशेषवाचकत्वेऽवश्यांगीकर्तव्ये, तत्संबंधविशेषादेव तेषां वेदविशेषेषु लक्षणया प्रयोगोपपत्त्याऽनेकार्थकल्पनस्यान्याय्यत्वात् ।

## लिंगाच्चेति सूत्रस्यार्थवर्णनम् ।

यत्तु—क्वचिदुक्तं निगदाधिकरणोदाहृतेन वेदोपक्रमरहितेन 'उच्चैः ऋचा क्रियते, नीचैः साम्ना, उपांशु यजुषा, उच्चैर्निगदेनेति वाक्येनोच्चैस्त्वादेर्मन्त्रधर्मताया उक्तत्वात् । वेदोपक्रमवताऽप्युच्चैर्ऋचेत्यादिवाक्येन मंत्रधर्मताया उक्तावेकस्मिन्साम्नि उच्चैस्त्व—नीचैस्त्वयोर्विरुद्धयोरष्टदोषदुष्टो विकल्पः प्रसज्येतेति वेदोपक्रमवति वाक्ये वेदधर्मता, नतूपक्रमप्राबल्यात्, तथा चेदमपि वेदोपक्रमाधिकरणगतस्य 'लिंगाच्चे'ति सूत्रस्यार्थोऽस्त्विति ।

## तन्निरासः ।

तदतितुच्छम्—नहि वेदोपक्रमाधिकरणविषयवाक्यात् निगदाधिकरणविषयवाक्यं भिन्नम् । येनोभयत्राऽपि पाठभेदः शंक्येतापि । ननु कथं तर्हि निगदाधिकरणे 'निगदो वा चतुर्थं स्याद्धर्मविशेषादि मी० द० २-१-३८ ति सूत्रेण 'अग्नीदग्नीन्विहर, बर्हिस्तृणीहि 'इत्यादिपर'प्रेषणरूपो निगदश्चतुर्थं मंत्रजातं स्यात्, अनृक्सामरूपस्य तस्य 'उपांशु यजुषा' 'उच्चैर्निगदेने'ति धर्मान्यत्वेन यजुर्जातादपि भिन्नत्वादिति पूर्वपक्षितम् । नहि वेदोपक्रमाधिकरणविषयवाक्ये उपांशुत्वं यजुर्जातधर्मः, येन धर्मत्वं हेतुः[1] सिद्धवदुपादीयेतेति चेत् ।

सत्यम् । वेदोपक्रमाधिकरणपूर्वपक्षरीत्योपांशुत्वं यजुर्जातधर्म इत्युपेत्य स हेतुरुक्तः । उक्तं हि न्यायसुधायां निगदाधिकरणे 'वेदो वा प्रायदर्शना-

दि'त्यत्र उच्चैस्त्वोपांशुत्वयोर्वेद धर्मत्वेवक्ष्यमाणेपि तत्रत्यपूर्वपक्षे स्थित्वा

उपांशुत्वस्य यजुर्जातधर्मत्वेनाच्चैस्त्वस्य तदन्यताक्तोंत न्या. सु. पृ. ।

तत्रैव व्यपदेशाच्चेति द्वितीयस्य पूर्वपक्षसूत्रस्यापि प्रयोजनमुक्तम् ।

---

१. धर्मान्यत्वे इति मु. पु. पा. ।

धर्मान्यत्वस्य तार्तीयवाक्याधिकरणविरुद्धत्वेनाभ्युच्चयमात्रत्वान्न मुख्यहेत्वभिधानार्थमिदं सूत्रम्—इति ।

## नयविवेकविसंवादपरिहारः ।

ननु नयविवेके वेदोपक्रमाधिकरणविषयवाक्यान्निगदाधिकरणविषयवाक्यस्य भेदोऽभ्युपगतः। सत्यम् । निगदाधिकरणभाष्ये[1] उच्चैस्त्वादीनाम् मंत्रधर्मत्वव्यवहारदर्शनात् तत्स्वारस्यानुरोधेन तत्र तद्भेदोऽभ्युपगतः, न तु निगदोपक्रमाधिकरणविषयवाक्ययोः पाठभेदोऽभ्युपगतः, प्रत्युत तद्ग्रन्थेनैव तयोः पाठाभेदोऽप्युद्घाटितः । तत्र हि उच्चैस्त्वादीनां निगदाधिकरणे मंत्रधर्मत्वमुक्तं, वेदोपक्रमाधिकरणे वेदधर्मत्वमिति विरोध इति शंकायां वेदोपक्रमवाक्यान्निगदाधिकरणविषयवाक्यांतरतया तत्समाधानमुखेन तयोर्भेदः प्रदर्शितः । एवमभेदभ्रांतिमूलविरोधशंकायां भेदप्रदर्शनेन निरसनं पाठाभेदमेव व्यवस्थापयति, पाठभेदे भ्रमायोगात् ।

## तत्रैव साक्षितया वरदराजीयस्योपन्यासः ।

वेदोपक्रमाधिकरणवरदराजीयेपि तदधिकरणपूर्वपक्षरीत्या वेदोपक्रमवाक्यस्य मन्त्रधर्मस्वरविधायकत्वे निगदाधिकरणोदाहृतवाक्यान्तरेणैव मंत्रधर्मत्वसिद्धेरेतद्वैयर्थ्यं स्यादिति शंकया, एतदधिकारान्वयपरम्, तत् आश्रयान्वयपरमिति वैयर्थ्यपरिहारेण च पाठाभेदः स्फुटीकृतः, नहि क्वचित्सान्ति उच्चैस्त्वविधिः, अन्यत्र नीचैस्त्वविधिरिति भेदे एकेनान्यस्य सिद्धार्थतया वैयर्थ्यशंकोन्मिषति। न वा विधेयभेदे एकमपूर्वान्वयबोधकम्, अन्यदपूर्वीयमंत्रविशेषान्वयबोधकमिति सार्थकत्वोपपादनं संगच्छत इत्यलमतिविस्तरेण । तस्माद्वेदोपक्रमप्राबल्येनैव वेदधर्मत्वनिर्णयः ।

## अश्वप्रतिग्रहेष्ट्यधिकरणविरोधाभावः

अश्वप्रतिग्रहेष्ट्यधिकरणेऽपि न तत्पूर्वाधिकरणसिद्धकर्मांगत्ववशेन दातुरिष्टिरिति निर्णयः, अन्योन्याश्रयापत्तेः । पूर्वाधिकरणे हि एतदधिकरणसिद्धं दातुरिष्टिरित्यमुमर्थमवेद्य कर्मांगत्वनिर्णयः। यदि हि ऋत्विजः प्रतिग्रहीतुरिष्टिः स्यात्, तदा तस्याधिकारसिद्धये तद्ग्राम्येव फलं कल्प-

1—'एवमुच्चैस्त्वेन गुणेन तानि यजूंष्येव व्यपदिश्यन्ते निगदाः' इत्यादिभाष्ये शा. भा. १ भा. ३८१ ।

नीयमिति, कथं यजमानगामिफलककर्मांगत्वं भवेत्। अतएवोत्तराधिकरणन्यायेन दातुरिष्टिरिति स्थितं, इदमधिकरणमारभ्यमिति भाष्यादिषु दर्शितम्।

## प्रतिग्रहीतुरिष्टिरितिपक्षेऽपि कर्माङ्गत्वोपपत्तिः

नन्वश्वप्रतिग्रहीतुरिष्टिरिति पक्षेऽपि कर्मांगत्वं सिध्यति, यजमानस्यापि 'द्वादशरात्रीर्दीक्षितो भूतिं वन्वीते'ति विहितदक्षिणार्थद्रव्ययाचनस्य भूतिवननप्राप्ताश्वप्रतिग्रहीतृत्वात्। यद्येवम्, न तर्हि कर्मांगत्वेन दाननिमित्तेष्टिः सिध्यति। कर्ममध्ये प्रतिग्रहीतुर्यजमानस्य 'हयोऽसि मम भोगाय भवे' तै. सं. १-२-३ त्यश्वप्रतिग्रहनिमित्तेयमिष्टिरिह कर्मांगभूतेति वक्तुं शक्यत्वात्। वार्तिकेऽपि 'सा लिंगादार्त्विजे स्यात् मी. द. ३-४-३३ इति दातृविषयोपक्रमवशात् कर्मांगत्वेन सूत्रस्थलिंगपदं कर्मसामर्थ्यपरं व्याख्याय, तत्रापरितोषेणैवोपक्रमप्राबल्यरूपवाक्यसामर्थ्यपरत्वेन व्याख्यातम्।

[1]कथं तर्हि मैत्रायणीयशाखायां दातुरिष्टिरिति, भविष्यति तैत्तिरीयशाखागतदातृविषयोपक्रमवशात्कर्मांगत्वेन सिद्धाया इष्टेः शाखांतरेऽप्यभेदात्, तत्रापि सा दातृविषया भविष्यतीति। एतदभिप्रायेणैवोक्तं तंत्रसारे—मैत्रायणीयशाखायामित्यादि। यथाश्रुति प्रतिग्रहीतुरेव वा सा भवतु। अतएव वार्तिके मैत्रायणीयशाखावाक्यमेवाधिकृत्योक्तं-यत्तु प्रतिग्रहीतुर्विधायकम्, तद्यदि तावत् कर्मांगत्ववशेन विनाप्युपक्रमविशेषात् पूर्ववाक्यानुसार्येव भवति, ततस्तेनापि दातुरिष्टिरिति निर्णयः। अथ स्वतंत्रप्रतिगृह्णाति[2]वशात् प्रतिग्रहीतुर्विधायकम्, ततः प्रतिग्रहीतुः, पूर्ववाक्याच्च दातुरित्युभौ करिष्यत इति। तस्मान्न कर्मांगत्वेन दातुरिष्टिरिति निर्णयः, नाप्यधिकारांतराकल्पनालाघवेन प्रतिग्रहनिमित्तत्वेऽपि भूतिवन[3]नप्राप्ताश्वप्रतिग्रहयुक्तपौण्डरीकानुप्रवेशसंभवेनाधिकारांतरस्याकल्पनीयतया लाघवाविशेषात्।

---

१—अत्र मुद्रितपुस्तके सूत्रं व्याख्यातम्। कथं तर्हि भविष्यतीत्यन्तमसंलग्नकं दृश्यते। अतः ख. पुस्तकानुसारी पाठ उपरि निवेशित इति।

२—दानवशादिति ख. पु. पा.।

३—वचनेति मु. पु. पा.।

यत्तु—भृतिवन[1]नप्राप्ताश्वस्वीकरणं वैधदानसंबंधित्वाभावात् न प्रतिग्रहरूपमिति। तत्तुच्छम्। 'चन्द्रमसि मम भोगाय भवेत्याह, यथादैवत-मेवैनाः प्रतिगृह्णाति" तै. सं. वा ६-१-४ इति श्रुत्यैव तस्य प्रतिग्रहरूपतोक्तेः 'गुर्वर्थनिवेशौषधार्थवृत्तिक्षीणयक्ष्यमाणाध्ययनाध्वसंयोगवैश्वजितेषु द्रव्य-संविभागो बहिर्वेदि भिक्षमाणेष्विव' बौ. ध. २-५-१९ ति स्मृतौ यज्ञार्थमर्थिने-[2] दानस्याप्यावश्यकत्वेन विहितत्वाच । गुरुणाप्यधिकारांतरप्रसंगादिति न मूलयुक्तितयोक्तम्। अतएवोपक्रमतो दाननिमित्ततावुद्धौ विपरिवर्तमाना यथाऽवभाति, तथाऽवधारयितुं युक्तेत्यनन्तरो गुरुग्रन्थो मूलयुक्तिमाहेति दीपशिखायामवतारितः।

## भाष्यकारान्तरमतखण्डनम्

यत्तु—[3]भाष्यकारान्तरमतानुरोधात्प्रतिग्रहीतुरियमिष्टिरस्त्वित्युक्तम्, "तद-युक्तम्। तर्हि 'सा लिंगादार्त्विजे स्यादि'ति सूत्रानुरोधादृत्विक्कर्मणि प्रतिग्रहे इयमिष्टिः, न तु यजमानाकर्मणि दाने इत्युक्तं[4], स्यात्, न च तदुपपद्यते, ऋत्विक्प्रतिग्रहस्य निमित्तत्वेऽ[5]धिकारकल्पनावश्यंभावेन 'यावतोश्वान् प्रतिगृह्णीयादि तै. सं. २-३-१२ त्यविशेषश्रवणात् लौकिकप्रतिग्रहस्यापि निमित्त[6]त्वस्य दुर्वारतया ऋत्विक्प्रतिग्रहस्यैव निमित्तत्वमिति नियन्तुम-शक्यत्वेन, तेषां तत्सूत्रानुरोधलाभाभावात्[7]। पूर्वाधिकरणपूर्वोत्तरपक्ष-सूत्रद्वयानांजस्यापत्तेश्च। तत्र 'दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि न वैदिके दोषः स्यादि'ति सूत्रेणेयमिष्टिर्लौकिकनिमित्तेति पूर्वपक्षं कृत्वा, 'अर्थ-वादो वानुपपातात् तस्माद्यज्ञे प्रतीयेते'ति सूत्रेण वैदिकनिमित्तेति सिद्धां-तितम्। तद्दातुरिष्टिरित्येतदधिकरणसिद्धांताभ्युपगमे श्लिष्यते। येयम्

---

१—वचनेति मु. पु. पा.।

२—ब्राह्मण–श्रोत्रिय वेदपारगेभ्य इति योजनीयम्।

३—भाष्यकारमतादिति मु. पु. पा.। ४—युक्तमिति मु. पु. पा.।

५—अधिकारान्तरेति ख. पु. पा.। ६—निमित्तत्वदुर्वारतयेति मु. पु. पा.।

७—अनुरोधाभावादिति ख. पु. पा.।

दातुरिष्टिः, सा किं लौकिकेऽश्वदाने मित्रदायादादिभ्यः स्नेहाद्युपाधिना कृते 'न केसरिणो ददाती'ति प्रतिषिद्धे दोषनिर्घातार्था स्यात्, उत पौंडरीकादौ दक्षिणारूपाश्वदाने निमित्ते तद्दाननिमित्तकर्मांगभूतेति संशये, वरुणग्र[1]हणदोषश्रवणात् प्रतिषिद्धे लौकिके इयमिष्टिः, नतु वैदिके, 'अन्वहम् द्वादश शतं ददा'ती अश्वसहस्रमुत्तमे इत्यादिविशेष[2]विहितत्वेन दोषास्पृष्टत्वादिति प्राप्तौ, लौकिकाश्वदातुः वरुणग्रहशङ्कितजलोदर व्याधिप्रादुर्भावस्यादृष्टत्वेन तन्निर्घातस्य फलत्वेनकल्पनायोगात्, दोषश्रवणस्य सादृश्यनिबंधनावश्यकर्तव्यतापरार्थवादमात्रत्वान्न तदनुरोधेन लौकिकं निमित्तम्। किन्तु वैदिक्या इष्टेः वैदिकमेव निमित्तं बुद्धिस्थं भवतीति, तदतिक्रमे कारणाभावात् वैदिके निमित्ते सेयमिष्टिः। न च वाक्येन वैदिकत्वसामान्यस्य बुद्धिस्थत्वापादकतया सन्निधिलक्षणस्थानरूपस्य बाधादश्वदानमात्रे निमित्ते सेयमिष्टिरस्त्विति शंक्यम्। लौकिके पुरुषार्थत्वम्, वैदिके क्रतुशेषतेति वैरूप्यापत्तेरिति सिद्धांतः—इति।

## प्रतिगृहीतुरिष्टिरिति पक्षेऽअनिष्टापादनम्

प्रतिग्रहीतुरिष्टिरिति एतदधिकरणसिद्धांताभ्युपगमे तु किमेषा लौकिके प्रतिग्रहे वैदिके वेति विचारपरं तदिति वक्तव्यम्। तत्र लौकिकवत् वैदिकस्यापि ऋत्विक्प्रतिग्रहस्य विशेषविध्यभावेन 'नोभयतो दतः प्रति गृह्णाति' इति दोषवत्त्वात् शास्त्रात् वैदिके न दोषः स्यात् इति न संगच्छते। अतएव वैदिकस्य वेदो[3]पात्तमेवनिमित्तं बुद्धिस्थं भवतीति, न्यायाप्रसरात् कर्माङ्गत्वहेत्वभावेन केवलं पुरुषार्था सती लौकिके स्यादिति यज्ञ इत्यपि न संगच्छते। आर्त्विज इति ऋत्विजां संबंधी यजमानस्तस्मिन्दातरी इयमिष्टिः स्यादित्यादिप्रकारेण वार्तिक एव याजतम्। याज्ञिकाः प्रतिग्रहीतुरेवेयमिष्टिरिति वदंति इत्येतत्तु वयं न जानीमः। यदि च ते मैत्रायणीयशाखायां दातृ[4] प्रक्रमाभावात् ततः प्रतिग्रहीतुरियमिष्टिरिति वदेयुः, तदा को विरोधः ?

---

१—ग्रहेति मु. पु. पा.। २—विशेषविषयत्वेनेति मु. पु. पा.।

३—वेदविहितमिति मु. पु. पा.। ४—लौकिकेऽपि इति मु. पु. पा.।

उक्तं हि वार्तिके—

'प्रतिग्रहीतरि स्पष्टं यदि वाक्यांतरं ततः।
भवेत्तस्यापि तेनेष्टिर्दातुस्तु न निवार्यते' ॥ तं. वा. ९६९ इति।

प्राभाकरैः पौंडरीके श्रूयत इति कृत्वाचिंता न दातुरिष्टिरिति सिद्धांतसिद्ध्यर्थमुक्तः। [1]'किन्तूपक्रमबलात् दातुरिष्टिरिति सिद्धावपि वैदिके दाने इत्यनारभ्याधीतवाक्यान्न सिध्यति, वैदिकस्य वैदिकमेव निमित्तमिति-नियमस्य क्षामवत्यादिषु व्यभिचारेणासिद्धेः। तत्सिद्धावपि क्रतुदक्षिणरूपाश्वदानं निमित्तमिति सिध्यति। स्मृति—पुराणादिप्रसिद्धसूर्यप्राप्तिफलकाश्वदानानामपि 'ये अश्वदाः सह ते सूर्येणे'त्यादिवेदमूलानां सत्त्वात् तत्सिद्धावपि कर्माङ्गत्वं न सिध्यति। क्रतुदक्षिणारूपस्याप्यश्वदानस्य अव्यभिचरित्क्रतुसंबन्धित्वेपि पर्णतावैषम्यात्पर्णतायाः शेषीभूतजुह्वन्वयप्रतीतेस्तद्वदपूर्वार्थत्वम्। इह तु दानं निमित्तत्वेन श्रुतम्। न शेषित्वेनाप्यन्वयार्हं, निमित्ततयाऽन्वये मुख्यार्थता, शेषितयान्वये नियोगोपलक्षणेति वृत्तिद्वयासंभवादित्यनुशयानैः कर्मांगत्वसिध्यर्थं सोक्ता'[2]। न च कर्मांगत्वनिवृत्तावधिकारांतरकल्पनायां प्रसक्तायां रात्रिसत्रवदार्थवादिकपापविमोकार्थिनोऽधिकारः कल्प्यः, पापापनयस्तु प्रतिग्रहीतुरेव, न दातुः।

## अनयोस्सामञ्जस्यसंपादनम्।

यद्यपि प्रतिग्रहीतुरपि यथाश्रुतार्थवाद[3]प्रतीतवरुणग्रहनिर्मोकफलकल्पनमशक्यम्, तथापि अश्रुतफलकल्पनातो वरमयोग्यांशव्युदासेन पापापनयनमात्रस्य फलत्वकल्पनमित्युपक्रमोपसंहारोभयसामंजस्यलाभात् प्रतिग्रहीतुरेवेष्टिः स्यादिति दातुरिष्टिरिति सिद्धांतसिध्यर्थमेव सोक्तेति वाच्यम्। 'न केसरिणो ददाती'ति निषेधेन लौकिकादश्वदातुरपि पापसद्भावात्। चायम् विश्वजित्प्रकरणाम्नातत्वात्तत्रत्यसर्वस्वदानविधिशेषपर्युदासः, न लौकिकाश्वदाननिषेध इति वाच्यम्। लौकिकाश्वदाननिषेधेन सम्भवच्चरितार्थत्वे न केसरिवाक्येऽनन्यगतिकयेयजामहवाक्यवत् 'गुणानां च परार्थत्वादि' मी. द. ३-१-२२। ति न्यायविरुद्धस्य गुणवाक्यं सद्गुणवाक्यांतरशेषः इत्यस्य कल्पयितुमशक्यत्वात् 'न केसरिणो' ददाति, नोभयतोदतः प्रतिगृह्णाती'ति संप्रतिपन्नपुरुषार्थनिषेधसाहचर्येण पुरुषार्थपरत्वस्यैव प्रतीयमान-

१—किमुपक्रमवशादिति मु.पु.पा.। २—नोक्ता. मु. पु. पा. ३—प्रतीति.

त्वाच्चेत्यनुशयानैः तत्सिद्ध्यर्थं सोक्ता। तस्मादियमिष्टिर्दातुरेव उपक्रमानुसारेणैव च तथा सिध्यतीत्यलं विस्तरेण।

## अक्ताधिकरणस्योपसंहारप्राबल्यशंका—समाधाने।

यत्त्वक्ताधिकरणसिद्धांत उपसंहारप्राबल्यनिर्वाह्य इत्युपक्रमप्राबल्योपगमे तद्विरोधापादनम्। तत्र न तावदक्ताधिकरणविरोधः, 'त्रयो वेदाः-अजायंतेत्युपक्रमे उपसंहारगतऋगादिविरोधिनां वेदानामिव'अक्ता' इत्युपक्रमे तद्गतविरोधिनां तैलादीनां प्रतीतेरभावात्।

ननु तत्र तैलादीनां शब्दतः प्रतीत्यभावेपि शब्दोपात्तांजनक्रियाक्षिप्तद्रव्यविशेषतया प्रतीतिरस्तीति चेत्। न। अर्थवादे श्रुतस्य घृतस्यैव तत्साधनत्वेनान्वयसंभवे आक्षेपानवतारात्, शीघ्रप्रवर्तमानेन निराकांक्षीकृतेऽर्थे विलंबितस्य श्रुतिविनियुक्तमंत्रस्य विनियोगे मन्त्रलिंगस्येवाप्रवृत्तेः। 'यदि हि अर्थवादान्वयात् प्राग्विध्युद्देशः पर्यवस्येत्, तदाक्षिप्ततैलसाधननिर्णयात्तदर्थवादस्तदनुरोधेन नेतव्यः स्यादपि। नत्वेवम्, प्ररोचनाम् विना विधेः पर्यवसानाभावात्। अनेनैवाशयेन प्ररोचनानपेक्षविध्यपर्यवसानं वार्तिके दर्शितम्—

'समाप्यते विधिः कश्चित्कदाचिन्नाप्ररोचितः।
घृते प्ररोचनां दृष्ट्वा विधिस्तत्रानुमीयते'॥ तं.वा.पृ.२६७ इति।

'संदिग्धेषु वाक्यशेषादि' मी.द.१.४.२९ ति सूत्रेप्यनेनैवाभिप्रायेण प्ररोचनानपेक्षविध्यपर्यवसानं दर्शितम्। इदं सूत्रं न्यायसुधायामेवम् व्याख्यातम् 'अर्थाद्वा कल्पनैकदेशत्वादि मी.'द.१-४-३०ति उत्तरसूत्रात्कल्पनैकदेशत्वादिति पदद्वयमिहानुषञ्जनीयम्। तथा'चायमर्थः—संदिग्धेषु वाक्यशेषात्-अर्थवादात्कल्पना-घृतादेर्व्यवस्थयाऽवधारणा, एकदेशत्वात् एकोऽर्थोदिश्यते-प्रतिपाद्यते याभ्यां विध्यर्थवादाभ्यां तावदेकदेशौ, तत्त्वात् विध्यर्थवादयोरेकार्थप्रतिपादकत्वात्। यदिह्यर्थवादान्वयं विना विध्युद्देशः पर्यवस्येत्, तदा वाक्यैकवाक्यतयाऽन्वयिनोर्थवादस्यान्वयात्प्रागेवार्थाक्षिप्तद्रवद्रव्यविशेषकल्पनया निर्णये जाते पश्चात्तनार्थवादानर्थक्यपरिहारायवैकृतांगवदन्यतराकांक्षयार्थवादस्यान्वये सत्यपि निर्णितार्थत्यागायोगात् तदनुरोधेन अर्थवादस्यैव घृताघृतलक्षकत्वं स्यादपि, नत्वेवम्। प्ररोचनाम्

विना प्रवर्तकस्य विधेः पर्यवसानासंभवात्। तथा च शीघ्रप्रवृत्तिकप्रत्यक्ष श्रुतिप्रापिते घृतरूपविशेषे सति उपक्रमस्थेनापि द्रवद्रव्यसामान्येन तैलादिविशेषो नाक्षिप्यते, नैराकांक्ष्यादिति नोपक्रमे सामान्यश्रवणे वेदोपक्रमन्यायावतारः—इति।

ननु यदि तैलादीनामाक्षेपतः प्रतीतिर्नास्ति, तदा कोट्यन्तरानुपस्थित्या संदेहायोगात् सूत्रे कथं सदिग्ध इत्युक्तम्। उच्यते। अर्थवादापरामर्शदशायाम् विध्युद्देशमात्रपरामर्शिनः संभवत्यव्यवस्थितार्थप्रतीतिः घृततैलवसादीनामन्यतममं जनसाधनं भविष्यतीति। सापि संदेहग्रहणेन ग्रहीतुं शक्यते, अनवधारणात्मकत्वाविशेषात्[1] उक्तंच न्यायसुधायां 'संदिग्धशब्देन-अव्यवस्थितार्थप्रतीतिरभिमते'त्यादि।

ननु यद्युपक्रममात्रपर्यालोचनालब्धाव्यवस्थितार्थप्रतीतिरूपसंहारलब्धया घृतव्यवस्थया बाध्यते, तर्हि सिद्धमुपसंहारप्राबल्यमिति चेत्। उच्यते। उपक्रमे श्रुतार्थस्योपसंहारेणोपमर्द एव तत्प्राबल्यमापद्यते, नतूपक्रमश्रुतार्थोपजीवनेन श्रुत्यन्तरापरामर्शिपुरुषबुद्धिकल्पितार्थस्य तेनोपमर्देपि, अन्यथोद्भिदादिवाक्ये यागश्रवणात् घृतादीनामन्यतममिह द्रव्यमिति कल्पना अतिदेशप्राप्तसोमव्यस्थया वारणीयेत्युपदेशादतिदेशः प्रबलः स्यात्।

## शंका

नन्वास्तामियं प्रतिवंदी, तथापि सुहृद्भावेन पृच्छामि[3] उपसंहारानुसारेणोपक्रमस्य संकोचाऽयमेकादेशबाधो भवत्येव कथं, दुर्बलेन प्रबलस्य बाध इति। न चोपक्रमे तैलादिविशेषाणामिव द्रवद्रव्यसामान्यविशेष[4]

१—अत्र दीक्षितेन्द्रैरुद्धृतन्यायसुधावाक्यसन्दर्भ एव अतएवेत्यादिना एकविषयत्वमेव हेतुत्वनोपात्तमित्यन्तेन १२९ पृष्टे उपन्यस्तमिति बोध्यम्।

२—अत्र संदिग्धशब्दोऽव्यवस्थितार्थप्रतिपादक इति राणकग्रन्थसन्दर्भं स्वोक्तिदार्ढ्यायोपन्यस्यति न्यायसुधायामिति।

३—पृच्छसीति मु. पु. पा.।

४—विशेष इति मु. पु. पा.।

स्याप्याक्षेपं विना प्रतीतेर्नास्ति संकोच इति वाच्यम्। 'वासः परिधत्ते, एतद्वै सर्वदैवत्यं वै, वासः, यत् क्षौममि'त्युदाहरणांतरे उपक्रमे शब्दतः प्रतीतस्य वाससः सामान्यस्य उपसंहारानुसारेण संकोचोपगमात्। नचार्थवादवाक्यानां पदैकवाक्यत्वाद्गामानय शुक्लामित्यत्र गोशब्दस्य शुक्लव्यक्ताविव कृष्णं व्यासः परिधत्ते, इत्यत्र वासश्शब्दस्य कृष्णव्यक्ताविव विध्युद्देशोपात्तसामान्यस्यार्थवादोक्तविशेषपर्यवसानं युज्यत इति वाच्यम्। तत्र गोवासःशब्दोपात्तं सामान्यं विशेषयितुमेव शुक्ल-कृष्ण.शब्दसंन्निधानमिति, तदवैयर्थ्याय गोवासःश्रुतिसंकोचेपि, प्रकृते सर्वदैवत्यत्वस्तुत्यर्थक्षौमशब्दसन्निधानेन संकोचायोगात्, पदैवाक्यतायमपि हि न सन्निधानमात्रं संकोचकम्, दुर्बलेन सन्निधिना श्रुति बाधानुपपत्तेः। किंत्वनन्यार्थसंनिधिः स्वानर्थक्यपरिहाराय श्रुतिसंकोचकः, 'आनर्थक्यप्रतिहतानाम् विपरीतं बलाबलमि'ति न्यायात्। यदि च पदैकवाक्यतायां संनिधिमात्रम् संकोचकं भवेत्, तदानीमश्वेन गच्छति श्वेतेन पटेन प्रावृत 'इत्यत्र पटसंबंधनिराकांक्षश्वेतशब्दसन्निधानेनाश्वश्रुतेः संकोचः स्यात्। तस्माद्युक्तव्यमिदं कथं दुर्बलेनोपसंहारेण प्रबलस्योपक्रमस्य संकोचरूपः बाध इति।

## तन्निरासः।

उच्यते। न प्रबलं प्रबलमित्येव दुर्बलोपस्थापितं निगृह्णाति, किंतु सति विरोधे। न चात्र दुर्बलस्याप्युपसंहारस्य उपक्रमेण विरोधः, प्रत्युत तदाकांक्षितसमर्पकतयाऽऽनुगुण्यमेव। अवश्यं हि अनुष्ठेयतयोपस्थाप्यमानम् सामान्यमनुष्ठानाय क्वचिद्विशेषे पर्यवसानमपेक्षते, निर्विशेषसामान्यस्य, सकलविशेषाणां वा उपादातुमशक्यत्वात्। तथा[1] च क्व विशेषे पर्यवसानमित्यपेक्षायां स यद्यपेक्षितो विशेषः कथमपि श्रुतो न लभ्यते, तदाऽऽक्षेपकसामान्यबलात्तत्तदनुष्ठानात् पुरुषबुद्ध्युपस्थापितमनियतं विशेषमासाद्य निवृत्तः स्यात्। तल्लाभे तु तत्रैव पर्यवसानं युक्तम्। क्लृप्त-कल्प्योपस्थितिकयोर्विशेषयोः क्लृप्तोपस्थितिकस्यैव लाघवेन ग्राह्यत्वात्। न च वाक्यशेषस्थ क्षौमादिग्रहणेपि तत्राप्यनुष्ठानाय विशेषाकांक्षायामनियतविशेषकल्पनमावश्यकमिति वाच्यम्। तथापि सर्वतो व्यावृत्ते व्यक्तिविशेषेऽनुष्ठानाय

१–क्वचिद्विशेष इति मु. पु. पा.।

ग्राह्यो यावान् विशेषो वाक्यशेषे श्रुतो लभ्यते, तावान् स एव ग्राह्यः, बुद्धिलाघवादिति। तदुपेक्षाकारणभावात्। एवञ्च यद्यप्युपक्रमस्य संकोचोऽयमेकदेशबाध एव। तथाप्यसौ तेनैवाकांक्षितो नोपसंहारेण कारित इति, न तेनास्य बाधः।

एतेन[1] अन्यार्थसन्निधानस्य संकोचकत्वमयुक्तमिति निरस्तम्। सत्यामाकांक्षायां तस्यापि संकोचकत्वात्। अत ए'वाग्नेय्या आग्नीध्रमुपतिष्ठते' तै. सं. ३-१-६ इत्यत्राग्नेयीश्रुतेःस्तोत्रादिकार्यांतरार्थेन 'अग्न आयाहि-वीतये' इत्याद्याग्नेयीविशेषसन्निधानेन तत्परतया संकोचोऽभ्युपेयते। 'आग्नेय्या आग्नीध्रमुपतिष्ठते' इत्यादिविधेः प्रकरणापादितसामान्यसंबंधानां सन्निहितानामाग्नेयीनामाग्नीध्रोपस्था[2]नात्मकद्वारविशेषसंबंधमात्रबोधने लाघवम्। अप्रकृतानामाग्नेयीनां ज्योतिष्टोमापूर्वीयत्वलक्षणसामान्यसंबंधोऽप्यनेनैव बोधनीय इति तद्विषयत्वे विधेर्गौरवमिति लाघवानुसारिणो विधेः सन्निहितास्वाकांक्षोदयात्। यद्य'प्यग्न आया हि वीतये' इत्यादीनां प्रदेशांतराम्नानेन सन्निधानं नास्ति, तथापि ज्योतिष्टोमप्रकरणाम्नानं तावदस्ति। तथा च यथा स्तोत्रादिकार्यन्तरार्थेन प्रकरणाम्नानेन विध्याकांक्षया आग्नेयीश्रुतिसंकोचः; तद्वदिहापि सामान्यश्रुतिसंकोचः, तदाकांक्षया सन्निधानानुसारेण युक्तः।

## अन्यार्थसन्निधानस्याकांक्षावशेन विशेषसमर्पकत्वम्।

आहत्यैव च सूत्रकारेणान्यार्थसंन्निधानस्याकांक्षावशाद्विशेषकत्वम् षष्ठे निर्णीतम्। तत्र ह्येका देया, षट् देयाः, द्वादश देयाः, चतुर्विंशतिः देया, शतं देयम्, सहस्रं देयम्, अपरिमितं देयम्, इत्याधानदक्षिणाकल्पभेदश्रुतावपरिमितशब्दो बहुत्वार्थकतया एकादिशब्दवद्दक्षिणाकल्पभेदपरइत्यपरिमाणे शिष्टस्ये मी. द. ६.७-२१, त्यधिकरणनिर्णयानंतरं सोऽपरिमितशब्दः किमनियतबहुत्वार्थः, उत सहस्राधिकबहूत्वार्थः, इति संशये, दक्षिणाकल्पांतरपरहस्रसन्निधानेन विशेषणासम्भवादनियतबहुत्वार्थ इति 'अनियमोऽविशेषादि' मी. द. ६-७-२३ ति पूर्वपक्षं कृत्वा अपरिमितशब्दस्य प्रतियोगिसापेक्षस्वभावबहूत्वार्थकत्वात्तदाकांक्षयाऽन्यार्थसन्निधानमपि विशेषकम्। अतः सन्निहितसहस्राधिकबहुत्वार्थ 'इत्यधिकं वा स्यात् बह्वर्थ वादितरैस्सन्निधानादि' मी. द. ६-९-२४ ति सूत्रेण सिद्धांतितम्।

---

१—चन्द्रिकोक्तमर्थं निरस्यति 'एतेन निरस्तमि'त्यन्तेनेति ध्येयम्।

२—उपस्थापनेति मु. पु. पा.।

यदैवम् सर्वथैवानन्वयिनि विध्यंतरे सन्निधानस्याप्याकांक्षावशाद्विशेषकत्वम्, तदा किमु वक्तव्यं स्तावकत्वेनान्वयिन्यर्थवादे सन्निधानस्य तद्वशात् विशेषकत्वमिति। तस्मात्साकांक्षानुसारेण संकोचः, नोपसंहारानुसारेण बलात्कारित इति, न तेन तस्य बाधः।

## आकांक्षानुरोधेन संकोच इत्यस्योदाहरणान्तरम्।

एवमे'वोद्भिदा यजेते'त्यत्र यजिना सामान्यत उपस्थापितस्य द्रव्यस्य अनुष्ठानाय विशेषाकांक्षानुरोधेनातिदेशिकसोमरूपविशेषपर्यंवसानात्मकसंकोचोऽपि नातिदेशेन कारित इति, न तेनोपदेशस्य बाधः। अतएव च दशमे अतिदेशादुपदेशस्य प्राबल्येन औपदेशिकशरादिनाऽऽतिदेशिककुशादिबाधव्युत्पादनानंतरं यत्र 'वायव्यं श्वेतमालभेते'त्यादौ औपदेशिकश्वेतादेरातिदेशिके छागादौ पर्यवसानं संभवतीति, न तेन तस्य बलवताऽपि बाधनं सं[1]भवति, किन्तु स्वाकांक्षानुसारेण तत्रैव पर्यवसानमित्युक्तम् 'नैमित्तिके कार्यत्वात् प्राकृते स्यात्तदापत्तेरि' मी. द. १०-२-६९ ति सूत्रेण।

यत्तु–कस्यचित् स्वयमनाकांक्षित एव संकोचो बलादन्येन कार्यते, स एव तस्य तत्कृतो बाधः। यथाहवनीयशास्त्रस्य पदशास्त्रेण। 'आहवनीये-जुहोती'ति शास्त्रेण हि न होमो विधीयते, येन सकलहोमानामुपादातुमशक्यत्वात्, स्वत एव विशेषाकांक्षा स्यात्। किन्त्विदं होमोद्देशेनाहवनीयं विदधाति। तत्र चासंकोचेन सकलहोमानुवादः स्वरससिद्धः, अनारभ्याधीतत्वात्। शक्यते च यथाप्राप्तसकलहोमानुवादस्वारस्यानुरोधेन यो यदा होमः कर्तव्यत्वेन प्राप्तः, स सर्वोऽप्याहवनीये कर्तुम्, ततश्चाहवनीयशास्त्रस्य स्वयमनाकांक्षित एव संकोचः 'पदे जुहोती'ति शास्त्रेण कारित इति, स तस्य तत्कृतो बाधः।

एतेन[2]—संकोचस्य बाधत्वाभावे वाक्यप्रकरणाधिकरणोक्तो वाक्येन प्रकरणस्य संकोचोऽपि बाधो न स्यादिति श्रुतिलिंगादिषट्कबलाबलव्यवस्थापि हीयेतेति–परास्तम्। तत्रापि दर्शपूर्णमासप्रकरणस्याविशेषण प्राकरणिकसर्वपदार्थानां दर्शपूर्णमासोभयसाधारण्योपपादने[3] प्रवृत्तस्य स्वतः संकोचाकांक्षाविरहेऽपि 'अग्नीषोमाविदं हविरजुषेताम्, अवीवृधेताम्, महोज्यायः

१—संभवतीति मु. पु. नास्ति,

२—एवं श्रुतिलिंगादिष्वपि इति तर्कताण्डवोक्तं निरस्यति, 'एतेनेत्यादिना परास्तमि'त्यन्तेन, ३—व्यापादने मु. पाठः।

अक्रातामि' तै. ब्रा. ३-५ ९.२१. त्यत्र लिंगात्पौर्णमासमात्रान्वय्यग्नीषोमीय-पदैकवाक्यतालक्षणैवाक्यप्रमाणेन 'इदं हविरि'त्यादेः पौर्णमासमात्रसाधारण्यमापादयता कारितस्तदतिरिक्तविषयत्वलक्षणः संकोच इति, तस्य तत्कृतबाधत्वाभ्युपगमात्। श्रुतिलिंगादिष्वपि यस्य स्वयमेवाकांक्षितः संकोचः, न तस्य तत्कृतो बाधः। यथोदाहृतः।

## अत्र विशेषेऽधिकरणद्वयस्योपन्यासः।

आग्नेय्यधिकरणे, अपरिमिताधिकरणे च प्रकरणस्थानानुसारेण श्रुतिसंकोचः। एवमन्यत्रापि भूयान्विषयः सुप्रसिद्ध एव। तस्मात्स्वत एव आकांक्षितः संकोचोऽन्यानुसारेण क्रियमाणोपि तत्कृतो बाध इति, नात्रोपसंहारेणोपक्रमस्य बाधः। उक्तं हि शास्त्रदीपिकायामक्ताधिकरणे-'अवश्यञ्च यः कश्चिद्विशेष उपादातव्यः, निर्विशेषसामान्येन व्यवहारासंभवात्। तत्रासति विशेषप्रमाणे, यः कश्चित् स्यात्। अस्ति तत्र घृतस्य प्रमाणमर्थवादः' शा. दी. पृ. ९.१ इति।

न्यायसुधायाञ्च 'यो [1]वाक्यशेषस्य सामान्यवचनेोपक्रमः, स निगमनवशेन श्रुत एव विशेषे व्यवस्थाप्यते। तस्योपक्रमापेक्षितविशेषसमर्पणेन तदानुकूल्यादि' न्याय. सु. पृ. ति। नयविवेकेऽप्युक्तम्—'उपक्रमापेक्षितविशेषसमर्पक एवात्रोपसंहारः, न तु तद्बाधकः'—इति।

## उपक्रमस्य कांस्यभोजिनयादुपसंहारानुकूलता।

किंचात्रोपक्रमस्याऽऽकांक्षाभावेऽपि कांस्यभोजिन्यायादुपसंहारानुसारित्वं युक्तम्। कांस्यभोजिनये हि चिन्तितम्—आग्रयणे ऐन्द्राग्नादीनि मुख्यानि हवींषि। तेषां बर्हिः प्रसूनम्, अप्रसूनं वेति न कश्चिन्नियमोऽस्ति। द्यावापृथिव्य एककपालो जघन्यं हविः। तस्य वैश्वदेविकैकपालप्रकृतित्वात्प्रसूनम्[2]—पुष्पितं बर्हिरिति नियमः प्राप्तः। तत्र किमाग्रयण ऐद्राग्नाद्यनुसारेण अनियतं बर्हिर्ग्राह्यम्, उत द्यावापृथिव्यानुसारेण प्रसूनं बर्हिरिति संशये, मुख्यत्वाद्, बहुत्वाच्च ऐद्राग्नादीनां तदनुरोधादनियमप्राप्तौ जघन्यस्यापि धर्मः प्रसूननियम आदर्तव्यः।[3]'प्रसूननियमोपादानेप्यैद्राग्नादीनामवैगुण्याद

१—वाक्यस्येति मु. पु. पा. २—प्रसूनमित्यस्य पुष्पितमिति प्रतिपदव्याख्यानम्। ३—प्रसूनोपादाने मु. पु. पा।

नियमे द्यावापृथिव्यस्य वैगुण्यप्रसंगात्। यथाऽनियतपात्रभोजिनो गुरोः, नियतकांस्यपात्रभोजिनः शिष्यस्य च क्वचिदेकपात्रभोजनप्राप्तौ गुणभूतस्यापि शिष्यस्यानुरोधेन कांस्यपात्रनियमः आद्रियते तद्वत्। तस्मादाग्रयणे[1] पुष्पितमेव बर्हिरिति सिद्धान्तः–इति। एवमिहापि निर्विशेषसामान्येन व्यवहारायोगादनियमेन यत्र क्वचिद्विशेषे पर्यवस्यत उपक्रमस्य घृतादिपर्यवसानेऽपि न कश्चिद्विरोधः। घृतादिस्तुतेस्तु सामान्यस्तुतौ पर्यवसानेऽनांजस्यमिति, उपसंहारानुसारित्वं न्याय्यम्

## अक्ताधिकरणस्य पारमर्थिकाशयः।

वस्तुतस्तु अक्ताधिकरण उपसंहारप्राबल्यशंकानिराकरणाय नैतावद्दूरं वक्तव्यमस्ति। विधौ संदिग्धमर्थवादेनावधार्येत इति हि तत्र व्युत्पादनम्, न तु उपक्रमे संदिग्धामुपसंहारेणावधार्येत इति। तत्र वाक्यशेषशब्दस्योपक्रमोपसंहारगतत्वानादरेणार्थवादमात्रपरत्वात्। यथोक्तं वार्तिके–

'विधिस्तुत्योस्सदा वृत्तिः समानविषयेष्यते।
तस्मादेकत्र संदिग्धमितरेणावधार्यते' तं. वा. ३६५ इति।

अत्र स्तुतौ संदिग्धं विधिनाऽवधार्येत इति नावमिके अर्थैकत्वाधिकरणे मी.द.९-२-९ प्रदर्शितस्यार्थस्य दृष्टान्ततयोपादानम्। तत्र हि 'यदृचा स्तुवते' तदसुरा अन्ववायन्, यत्साम्ना स्तुवते, तदसुरा नान्ववायन् 'इत्यत्र किमसुरागमनहेतुतया ऋक्निंद्यते, उत वशीकर्तुमशक्यानामसुराणामपि वशीकरणहेतुतया स्तूयत इति संदिग्धम्, तदनन्तरश्रुतेन 'य एव विद्वान्साम्ना स्तुवीते'ति सामविषयेण विधिनाऽवधार्यते, विधित्सितसामप्रशंसार्थमृक्

---

१—आग्रयणेष्विति मु. पु. पा.।

२—तर्कताण्डवकृतोक्तमेकदेशसंकोचरूपं बाधमुपसंहारकारितमित्यर्थमुदाहरणप्रपञ्चेन निरस्यति 'यथा उदाहृतइत्यादिना. प्रसिद्ध एव त्यन्तेन।

३—उपसंहारो नोपक्रमस्य बाधकः, अपितूपक्रमापेक्षितार्थसमर्पक इत्यर्थम् शास्त्रदीपिका–न्यायसुधा–नयविवेकवचनैर्द्रढयन् पूर्वपक्षिणोक्तस्यार्थस्य प्राचीनग्रन्थानारूढत्वं सूचयतीति ध्येयम्।

निंद्यते इति, तन्निंदापरत्वम्। एवं तदेकवाक्यत्वोपपत्तेरित्युक्तम्। विधौ संदिग्धं स्तुत्यावधार्येत इत्येतदधिकरणव्युत्पाद्यकथनम्। अत्र यः प्रसिद्धः संदेहः, यश्चाव्यवस्थितार्थप्रत्ययः, तदुभयमपि संदेहत्वेन विवक्षितः, अनवधारणरूपत्वाविशेषात्। संदिग्धमिति च यदेव किंचन विधौ नावधृतम्, तत्सर्वं निर्दिश्यते। यथोक्तं यववराहाधिकरणे वार्तिककृता—

'संदिग्धेषु तु सर्वेषु वाक्यशेषेण निर्णयम्।
वक्ष्यत्येवमतो नात्र पृथक्कार्या विचारणा' ॥ 'तं. वा. पृ. ति।

[4]यथा यत्र च विधौ शब्दस्वरूपमेव प्रकृतितः, प्रत्ययतो वा नावधार्यते, शब्दनिश्चयेपि वा तस्य शक्यं नावधार्यते, अनेकशक्यार्थनिर्णयेपि, प्रकृते विवक्षितोर्थो नावधार्यते, अर्थावधारणेपि वचनव्यक्तिभेदः नावधार्यते,[5] तदवधारणेपि उद्देश्यम्, उपादेयं वा विशिष्य नावधार्यते, तत्र सर्वत्रापि विशेषावधारणसमर्थेनार्थवादेन यत्र तत्र स्थितेनापि विशेषावधारणमिह व्युत्पाद्यम्।

---

१—अत्रेदं बोध्यम्—'सन्दिग्धेषु वाक्यशेषादि'ति सूत्रे ऽनन्तरसूत्रात् 'अर्थाद्वा कल्पनैकदेशत्वादि'त्यस्मात् कल्पनैकदेशत्वादिति पदद्वयमत्रानुषञ्जनीयम्। तथा चायं सूत्रार्थः—संदिग्धेषु वाक्यशेषात्—अर्थवादात् कल्पनै· अवधारणा-कदेशत्वात् एकोऽर्थः दिश्यते-प्रतिपाद्यते याभ्यां विध्यर्थवादाभ्याम्, तावैकदेशौ, तत्त्वात्-विध्यर्थवादयोरेकार्थप्रतिपादकत्वादित्यर्थः।

न्यायसुधाकारीयव्याख्यानं दीक्षितेन्द्रैः पूर्वं पृ. २९ उदलेखि। अक्ताधिकरणभाट्टदीपिकायां विध्यर्थवादयोरेकवाक्यत्वेनैकविषयकत्वस्यावश्यकत्वादि- पृ १२९ ति ग्रन्थस्याशयं विवृण्वता कविमण्डनशम्भुभट्टेनापि सर्वोऽप्ययमर्थस्संगृहीत इति विस्तरस्तत्रैव द्रष्टव्यः।

२—यववराहाधिकरणवार्तिके सन्दिग्धपदमित्थं व्याख्यातम्। तथाहि—'संदिग्धेषु वाक्यशेषादि'ति सूत्रे सन्दिग्धपदेन यः प्रसिद्धस्सन्देहः, यश्चाव्यवस्थितार्थप्रत्ययः, तदुभयमपि सन्देहत्वेन विवक्षितम्, अनवधारणरूपत्वात्, अव्यवस्थितार्थप्रतीतेरपि सन्दिग्धपदेन ग्रहणात्। आदित्याग्निसारस्वतयवरुद्र दीर्घसोमसोमवमनगवामयनगतचतुरहचातुर्मास्यगतपर्वद्वयशब्दानामर्थोऽर्थवादान्निर्णीयते। अयमर्थो मूल एव व्यक्तः।

४—तथेति मु. पु. पा.।

[1]तत्र 'आदित्यः प्रायणीयः' इत्यत्र देवतातद्धितप्रकृतावस्ति संदेहः–किमदितिशब्दः, उतादित्यशब्द इति। दित्यदित्यादित्यपत्युत्तरपदाण्यः' पा. सू. इति ण्यप्रत्यये सति रूपस्योभयत्राप्यविशेषात्। अदित्यै चरुम्, अमुमेवादित्यं स्वेन भागधेयेनोपधावती तै. सं. २-१-७-त्यादौ उभयोरपि देवतात्वेन वैदिकप्रसिद्ध्यविशेषाच्च, स चादितिशब्द इति 'तेऽदित्याम् समध्रियंत' इत्याद्यर्थवादवशादवधार्यते।

[2]"यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति, 'तै. सं. २-६-३, इत्यत्र तद्धितप्रकृतिभूतोऽग्निशब्दः किमेकवचनान्तः, किं वा बहुवचनांत इत्यस्ति 'संदेहः। अग्नये कृत्तिकाभ्यः' तै. वा. ३-१-१, इत्यादौ 'तेऽस्मादग्नये द्रविणं दत्वे'त्यादौ च देवतापराग्निशब्दस्योभयथापि दर्शनात्स एकवचनांतः 'सोग्नयेऽध्रियत' इत्यर्थवादादवधार्यते।

तथा [3]"तस्मा एतमादित्यं चरुं निर्वपेदि'त्यत्रादित्यशब्दः किमेकवचनांतः, बहुवचनांतो वेत्यस्ति संदेहः। 'अमुमेवादित्यं' 'आदित्येभ्यो-भुवद्वद्भ्यः' इत्यदावुभयथापि दर्शनात्सबहुवचनान्तः 'आदित्यानेव स्वेन भागधेयेनोपधावति' इत्यर्थवादादवधार्यते।

[4]"सारस्वतौ भवतः' इत्यत्र किं तद्धितप्रकृतिः पुल्लिंगः, स्त्रिलिंगः वेत्यस्ति सदेहः। सरस्वत्यै चरुम्, सरस्वते चरुमि'त्युभयोरपि देवतात्व-प्रसिद्धेः। तत्रैकः स्त्रीलिंगः, अन्यः पुलिंग इति, 'एतद्वै दैव्यं मिथुनमि'-त्यर्थवादादवधार्यते।

[5]"यवमयश्चरुर्भवति' इत्यादौ यवशब्दशक्येऽस्ति संदेहः—दीर्घशूकः, प्रियंगुर्वेति, उभयत्र प्रयोगदर्शनात्। 'यत्रान्या ओषधयो म्लायंते, अथैते मोदमाना इवेत्तिष्ठंती'ति अर्थवादाद्दीर्घशूक इति निर्णीयते।

[6]"सोमारौद्रं चरुं निर्वपेदि'त्यत्र रुद्रशब्दार्थेऽस्ति संदेहः–अग्निः, शिवः वेति। अग्निं प्रस्तुत्य 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वमि' तै. सू. ४ ति श्रौतनिर्वचनेन, 'रुद्रमग्निं द्विजाः प्राहूरि'ति पौराणिकवचनेन च रुद्रशब्दस्य अग्निरर्थ इत्यवगतम्।

शिवं प्रस्तुत्य 'अथ कस्मादुच्यते रुद्रः' इत्यादिंश्रौतनिर्वचनात्'

'रुद्-दुःखम्-दुःखहेतुर्वा तद्द्रावयति नः प्रभुरि'त्यादिपौराणिकवचनाच्च प्रसिद्धिप्राचुर्याच्च शिवोऽर्थ इत्यवगतमिति नानार्थत्वात् 'सोमो वै रेतोधाः, अग्निः प्रजानां प्रजनयिते'त्यर्थवादादग्निरित्यवगम्यते।

ज्योतिष्टोमे-अधिषवणफलके प्रकृत्य 'अथो खलु दीर्घसोमे संतृद्येधृत्यै' तै० सं० ६-२-११ [1]इत्याम्नाते दीर्घसोमे इत्यस्य वचनव्यक्तावस्ति संदेहः किं प्रकरणादनुत्कर्षलाभेन दीर्घस्य यजमानस्य सोमो ज्योतिष्टोम इति षष्ठीसमासरूपा वचनव्यक्तिः, किंवा कर्मधारयसमासबलीयस्त्वानुरोधेन ज्योतिष्टोमापेक्षया दीर्घे सोमे द्विरात्रादाविति कर्मधारयरूपवचनव्यक्तिः इत्यस्ति संदेहः। धृत्या इत्यर्थवादेन कर्मधारयरूपेति निश्चीयते। दीर्घकाले हि सोमयागे पुनः पुनः ग्रावभिरभिहन्यमानायां सोमलतायामधिषवणफलयोर्दारणशंकया तयोर्दाढार्यार्थं संतर्दनस्य-परस्परसंश्लेषरूपस्य विधिर्धृत्यै-धारणायेत्यर्थवादस्संगच्छते। यजमानदैर्घ्येण दारणशंकाभावान्न संगच्छते—इति।

'वि एष इन्द्रियेण वीर्येणर्ध्यते, यस्सोमं वमिति, यः सोमवामी स्यात्, तस्मा एतं सोमेन्द्रं श्यामाकं चरुं यिनर्वपेदि तै. सं. २-३-२, त्युदे श्यभू तेनिमित्तेऽस्ति संदेहः-किं वैद्यकोक्तलौकिकसोमवमनं निमित्तम्, उत यागशेषरूपवैदिकसोमवमनमिति। इन्द्रियवीर्यापचयरूपदोषश्रवणरूपा-[2] दर्थवादाद्वैदिकसोमवमनं निमित्तमवधार्यते। यद्यपि इन्द्रियवीर्यापचयः लौकिकसोमवमनेपि भवति, तथापि स तत्र न दोषः। वैदिके धातुसाम्योपयोगिशरीरांतर्गतदोषनिःसारणाय वमनार्थमेव सोमपानं विहितम्, वमनञ्च क्रियमाणमिन्द्रियवीर्यापचयाविनाभूतमित्यंगीकृतग्लानित्वात्। वेदे तु सोमपानं न वमनार्थं विहितम्, यागशेषप्रतिपत्तिरूपत्वात्। प्रतिपत्तिश्च भक्षणरूपा सम्यग्जरणपर्यन्तेति लोकतः, 'हिन्व मे गात्रा हरिवः' इत्यादिमंत्रलिंगाच्चावधारिता। वमनेन व्यापद्यत इति वैदिकवमन एव स दोषः।

## अव्यवस्थितार्थप्रतीतेरुदाहरणम्।

तथा-'चतुरहे पुरस्तात्पौर्णमासे दीक्षेरन्नि'ति गावामयनिककालविधौ

---

१—आम्नायते इति मु. पु. पा.

२—स्वरूपादिति. मु. पु. पा.

उद्देश्यकालेऽस्त्यव्यवस्थितार्थप्रतीतिरूपः संदेहः। अनियमेन या काचित् पौर्णमासीति तेषामेकाष्टकायां क्रयः संपद्यत' इति[1] माघकृष्णाष्टम्यामेकाष्टकाशब्दवाच्यायां सोमक्रयसंपत्तिवर्णनरूपादर्थवादान्माघीति निर्णीयते।

## उद्देश्यविशेषनिर्णयस्योदाहरणम्।

एवम्—चातुर्मास्ये वैश्वदेव-वरुणप्रघास-साकमेध-शुनासीरीयलक्षणपर्वचतुष्टयवति 'द्वयोः प्रणयन्ती'ति द्वयोः पर्वणोरग्निप्रणयनविधौ उद्देश्ययोः पर्वणोरस्त्यव्यवस्थितार्थप्रतीतिरूपः संदेहः। अनियमेन ययोः कयोश्चि द्वयोः पर्वणोरिति। 'तस्माद्वाभ्यांमेती'त्यर्थवादान्मध्यमयोरिति निश्चीयते। ऊरुभ्याम् हि लोके गच्छन्ति, ऊरुसंस्तुते च मध्यमे पर्वणी, ऊरू वा एते यज्ञस्य यद्वरुणप्रघासाः, साकमेधाश्चेति। उपादेयविशेषनिर्णयस्त्वर्थवादादक्तैवाक्ताः शर्कराः इत्याद्युदाहरणे। एवं यत्किंचिद्विधौ संदिग्धम्, तत्सर्वमुपक्रमोपसंहारगततत्वानादरेणार्थवादमात्रान्निर्णेयमिति व्युत्पादयितुंप्रवृत्तेऽस्मिन्नधिकरणे नोपसंहारप्राबल्यव्युत्पादनशंकावकाशः[1]। यद्यप्येतेषु 'आदित्यः प्रायणीय' इत्यारभ्योदाहृतेषु क्वचित्क्वचिदुपायांतरेणापि निर्णयः संभवति, तथाप्यर्थवादस्यापि निर्णयसामर्थ्यमविकलमेव।

## उक्तेऽर्थे शंका

[2]ननु यदि सर्वोऽप्यर्थवादात्संदिग्धार्थनिर्णयोऽत्रैव व्युत्पाद्यः, किमर्थम् तर्हि तृतीये सूत्रकारेणैव 'दीर्घसोम' इत्यत्र षष्ठीसमास इति 'क्रतौ वाविशेषस्स्यात् तन्निमित्तत्वादि' ३-३-२६ ति सूत्रेण पूर्वपक्षं कृत्वा, 'क्रतोवार्थवादानुपपत्तेस्स्यादि' मी० द० ३-३-२७ ति सूत्रेण कर्मधारय इति सिद्धांतितम्।

तत्रैव 'पानव्यापच्च तद्वदि' ३-४-३८ ति सूत्रेणालौकिकं सोमवमनम् निमित्तमिति पूर्वपक्षं कृत्वा 'दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न दोषस्यादि'ति सूत्रेण वैदिकं सोमवमनं निमित्तमिति सिद्धांतितम्।

---

१—इदञ्चामान्तो मास इति चान्द्रमानेनेति पक्षे युज्यते, पूर्णिमान्तपक्षे फाल्गुनकृष्णाष्टमीति बोध्यम्।

२—उदाहृतानामधिकरणानां गतार्थता स्यात्, तत्र करिष्यमाणस्य निर्णयस्य सिद्धत्वादेषानुपपत्तिरित्याशंकते—नन्विति।

षष्ठे च गवामयनकालविधौ या काचित्पौर्णमासीति 'पौर्णमास्यामनियमो विशेषादि'ति सूत्रेण पूर्वपक्षं कृत्वा माघी वैकाष्टकाश्रुतेरि मी० द० ६-५-३२-३३ ति सूत्रेण माघीति सिद्धांतितम् ।

सप्तमे च 'प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधादि' ७-३-२३ ति सूत्रेण वैश्वदेव-'शुनासीरीययोः प्रणयनमिति पूर्वपक्षं कृत्वा, मध्यमयोः वा गत्यर्थवादादि' ७-३-२४ ति सूत्रेण वरुणप्रधास-—साकमेधयोरिति सिद्धांतितम्—इति ।

## शंकानिरासः

उच्यते । सर्वविधस्यापि वाक्यशेषात्संदिग्धार्थनिर्णयस्याक्ताधिकरणे एव सिद्धत्वेपि, संतर्दनविधेः प्रकरणादनुत्कर्षलाभात् षष्ठीसमासाश्रयणम् वरमित्यधिकाशंकावाराणाय दीर्घसोमवाक्यस्य पुनर्विचारः ।

इंद्रियवीर्यापचयरूपपुरुषसंबंधिदोषश्रवणे चरोः पुरुषार्थत्व एव उपपद्यत इति, तत्सिद्धये लौकिकसोमवमनमेव निमित्तम् । वैदिकवमनस्य निमित्तत्वे हि चरोः क्रत्वर्थतया वमनेन क्रतुवैकल्यदोषः श्रूयत इत्यधिकाशंकानिरासाय वमनेष्टिवाक्यस्य पुनर्विचारः ।

'द्वादश पूर्णमास्यः, द्वादशैकाष्टका' इति श्रुत्यंतरे चैत्रादिमासगतासु द्वादशस्वपि कृष्णाष्टमीष्वेकाष्टकाशब्दप्रसिद्धेर्नार्थवादवशेन माघीति निर्णयः इत्यधिकाशंकावारणय गवामयनकालविधिवाक्यस्य पुनर्विचारः ।

'न वैश्वदेव उत्तरवेदिमुपवपंन्ति, न शुनासीरीये' इति प्रथमोत्तमपर्वणोरुत्तरवेदिप्रतिषेधात् लिंगा[२]दग्नेः प्रणयनं तयोरेवेत्यधिकाशंकावारणाय प्रणयनवाक्यस्य पुनर्विचार इत्यादिष्वेवाधिकरणेषु स्पष्टम् ।

## अक्ताधिकरणस्य प्रतिपाद्यनिगमनेनोपक्रमप्राबल्योपजीवनम् ।

वस्तुस्थितिस्तावादियं यदक्ताधिकरणे विधौ संदिग्धस्य यत्र तत्र स्थितेनार्थवादेन निर्णयो व्युत्पादित इति, तदतिलंघनेन तत्रोपसंहारप्राबल्योपजीवनोत्प्रेक्षायांतु ततोप्यांऽजस्येनोपक्रमप्राबल्योपजीवनमेवोत्प्रेक्षितुम्

---

१—अग्निप्रणयनमिति समस्तः पाठः मु० पु० ।

२—शर्करा अक्ता उपदध्यात्, तेजो वा आज्यम्, सतेजसमेवाग्निञ्चिनुते, तै० ब्रा० ३-१२-५ इति पाठः ।

शक्यम्। तथाहि 'अक्ताश्शर्करा' इत्यत्र विधिस्तुत्योरेकविषयतया यथोपक्रमावगतद्रवद्रव्यसामान्यस्य वाक्यशेषे घृतसंकीर्तनात् घृतरूपतयास्ति संकोचः। तथा घृतस्य यज्ञांतर्गतांजनक्रियासाधकद्रवद्रव्यविशेषतयान्वयाददुष्टघृतरूपतयास्ति संकोचः। जात्या, संसर्गादिना वा दुष्टस्य घृतस्यायज्ञीयत्वात्। एवं च यद्युपप्युपक्रमोपसंहार[1] गतयोर्द्रवद्रव्यघृतयोरविशिष्टः संकोचः,। तथाप्युपक्रमेनुष्टेयतयावगतस्य द्रवद्रव्यसामान्यस्यानुष्ठानाय स्वस्यैव विशेषकांक्षया संकोचः,। उपसंहारे तेजस्त्वेन स्तुतस्य घृतस्य तु न स्वाकांक्षया संकोचः। घृतसा[2]मान्यस्याप्यौज्ज्वाल्यादिगुणतस्तेजस्त्वेन स्तुत्यविरोधात्। किंतूपक्र[3]मावगताञ्जनक्रियासाधनद्रवद्रव्यविशेषान्वयानुसारेणैवेत्येवं सुवचमुपक्रमप्राबल्योपजीवनम्।

## अत्रैवोदाहरणान्तरकथनम्

नन्वक्ताधिकरणे संदिग्धार्थनिर्णय इत्युपक्रमगतसामान्यस्योपसंहारानुसारेण संकोचे तन्मा भूदुदाहरणम्। तथाप्युदाहरणान्तरमस्त्येव। तथाहि-ज्योतिष्टोमे 'तुल्यान्यविशिष्टं हि कारणमि मी० द० ४-४-३९ ति चतुर्थोपां धिकरणेदीक्षणीयादीनामिष्टीनाम्, अग्नीषोमीयादीनांप शूनाम्, सोमयागस्य च सन्निधौ 'ज्योतिष्टोमेन स्वर्गकामो यजेतेत्याम्नातोयजेः सन्निहितसर्वयागानुवादस्वारस्येन सर्वेषामेव तेषां फलसंबंधप्रतीतावपि वाक्यशेषे 'त्रिवृत् पंचदशः, सप्तदश, एकविंशः एतानि वाव तानि ज्योतींषिय, एतस्य स्तोमाः' तै० सं० १-५-११-२ इति ज्योतिःशब्दितत्रिवृदादिस्तोमसंबंधिनः सोमयागस्य विशिष्य कीर्तनात् तत्रैव यजेः पर्यवसानमिति सोमयागस्यैव फलसंबंधः, इतरेषांतु [4]फलवदफलन्यायेन तदंगत्वमिति निर्णीतम्। अत्र ह्युपक्रमे नास्ति [5]स्वरसतः संदेहः, दीक्षणीयादयफलसंबंधिनः, सोमयागोवेतिनाप्यव्यवस्थितप्रतीतिरस्तिदीक्षणीयादिसोमयागान्तानां मध्ये अनियमेन-

---

१—उपसंहारानुगतयोरिति मु. पु. पा.।

२—घृतसामान्येऽपि मु. पु. पा.।

३—उपक्रमगतेति मु. पु. पा.।

४—फलवत्सन्निधावफलं तदंगमिति न्यायस्वरूपम्। तत् पुनर्मुख्यलक्षणम् तत्सन्निधावसंयुक्तं तदंगं स्यादि ४-४-३२ ति जैमिनीयं सूत्रतस्यैकदेशः। अस्यार्थः— तत्—फलसंयोगित्वमुख्यलक्षणम्—प्रधानलक्षणम्। यत्फलासंयुक्तमाम्नातम्, तत् तदंगत्स्यादिति सौत्रोऽयं न्यायः ५—स्वत इति मु. पु.।

कश्चिदेव फलसंबधीति अत एव फलार्थमनुष्ठानाय को याग उपादातव्य इति विशेषाकांक्षापि नास्ति सन्निहितसर्वयागानामसंकोचेन राजसूयवाक्य इव फलसंबंधित्वोपपत्तेः। 'राजसूयेन स्वाराज्य कामो यजेते'त्यत्रयजेः सन्निहितसर्वयगानुवादस्वारस्यानुरोधेन सन्निहितानामनुमत्यदीनामिष्टी-नाम्, मल्हादीनां पशूनाम्, पवित्रादीनां [1]सोमयागादीनां चाविशेषेण फल संबंधाभ्युपगमात् तथापि यदत्र वाक्यशेषानुसारेण संकोचकल्पनम्, तदुपसंहारप्राबल्येनैव।

एवम्—नवमेऽपि 'पत्नीसंयाजांतत्वं सर्वेषामविशेषादि मी. द.९-१-२३ त्यधिकरणे द्वादशाहे-श्रुतस्य 'पत्नीसंयाजांतान्यहानि संतिष्ठन्ते' इत्यविशेषेण-सर्वेषां सौत्यानामह्नां पत्नीसंयाजांतत्वविधे 'रसंस्थितो हि तर्हि यज्ञ, इति क्रतोरसमाप्तिप्रतिपादकवाक्यशेषानुसारेण येष्वहसु क्रतोरपरिसमाप्तिः, तेषामेकादशानामेवाह्नां पत्नीसंयाजांतत्वविधायकमिति यन्निश्चितम्, तद-प्युपसंहारप्राबल्येनैव, तदभावे सर्वेषामह्नां पत्नीसंयाजांतत्वसंभवेन असंदिग्धोपक्रमस्य संकोचकल्पनायोगात्।

## उपसंहारन्यायशंका

स्यादेतत्—सामान्यविधेर्विशेषसंकीर्तने सति साप्तदश्यवत्तदुपसंहारः न्याय्य इत्यधिकरणद्वयेपि वाक्यशेषानुसरणम्, नतूपसहारभागप्राबल्येन। नहि 'सप्तदश सामिधेनीरनुब्रूयादि'त्यनारभ्याधीतस्य सामिधेनीसाप्त-दश्यविधेः पांचदश्यावरुद्धायां प्रकृतौ निवेशमलभमानतया विकृतिगामित्वे-वक्तव्ये, विशेषाश्रवणात्सामान्यतः सर्वविकृतिगामित्वेन प्रतीयमानस्य श्रुतसाप्तदश्यासु मित्रविंन्दादिषु यदुपसंहरणम्, तदुपसंहारभागप्राबल्य-प्रयुक्तम्। अनारभ्याधीतस्य मित्रविंदादिगतस्य च साप्तदश्यविधेरेकत्र आम्नानाभावेनापक्रमोपसंहारभावाभावादिति चेत्?

## तन्निरासः

नैवम्—अनारभ्याधीतस्य साप्तदश्यस्य विशेषोपसंहारः, न विशेष-संकीर्तनमात्रात्, त्किंत्वस्पष्टत्वात्। तथा हि—सामिधेनीनां साप्तदश्यम् अनारभ्यधीतवादेनोक्तम्, तद्यावत्सामिधेनीद्वारा सर्वविकृत्यर्थत्वं कल्पयितु-मुपक्रम्यते, तावदेव मित्रविंदादिषु प्राकरणिकेन वाक्येन क्रतुविशेषसंबंधे

१—क्रतूनामिति मु० पु० पा०

कृते क्षीणाऽर्थापत्तिर्न क्रत्वंतरसंबंधं कल्पयतीति, अस्पष्टक्रतुसंबंधत्वात् साम्रदश्यस्योपसंहारः। नेह तथा विधावस्पष्टः क्रतुसंबंधः वाक्यशेषे स्पष्ट इति विशेषोस्ति। अतो नात्रोपसंहारन्यायः प्रवर्तते।

अतएव 'अभावादतिरात्रेषु गृह्येत' मी. द. १०-५-५३ इति दाशमिके-अधिकरणे 'उत्तरेहन् द्विरात्रस्य गृह्येत' इत्यनारभ्याधीतवाक्येन सामान्यतः द्विरात्राणामुत्तरेहनि षोडशिग्रहविधानस्याङ्गिरसाद्विरात्रप्रकरणे वैखानसम् पूर्वेहन्साम भवति[1] षोडश्युत्तर इति विशेषसंकीर्तनेनांगिरसांद्विरात्रे-उपसंहारमाशंक्य, अनारभ्याम्नानेन षोडशिग्रहस्य सामान्यतः सर्वद्विरात्र-क्रतुसंबंधस्य स्पष्टत्वान्न तस्योपसंहारो युक्त इति, प्राकरणिकंवाक्यं वैखान-सविधिशे[2]षोऽर्थवादमात्रमित्युक्तम्। उक्तं तन्त्रवार्तिके—

'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः।
[3]स्पष्टस्य तु विधेर्नान्यैरुपसंहारसंभवः' ॥ तं. वा. ९७७ पृ. इति।

अन्यथा 'न ब्राह्मणं हन्यादि'ति सामान्यनिषेधस्यापि 'नात्रेयं हन्यादि'ति विशेषोपसंहारः कल्प्यते। यदि तु स्पष्टस्यापि कचिदुपसंहारः कल्प्येत, तथापि यत्र अनन्यथासिद्धं विशेषसंकीर्तनमस्ति, तत्रैव तदुपसंहारः। 'अन्यथा 'यत्किंचित्प्राचीनमग्निषोमीयात्तेनोपांशु चरन्ती'ति सामान्यतोऽग्निषोमीया-त्प्राचीनेषु उपांशुत्वविधेरपि 'यावत्या वाचा कामयेत, तावत्या दीक्षणीयाया-मनुब्रूयात्, मंद्रं प्रायणीयायाम्, मंद्रतरमातिथ्यायाम्, उपांशूपसत्स्विति-श्रवणादुपसन्मात्र उपसंहारः प्रसज्येत। नच 'यत्किंचिदि'ति वीप्सानु-सारेणानुपसंहारः, उपसदां साकल्यमादायापि वीप्सोपपत्तेः। तस्माद्यथा तत्रोपांशूपसत्स्वित्यत्र सामान्यवचनप्राप्तमुपांशुत्वमवलंम्य, दीक्षणीया-दिस्वरांतरविधानप्रशंसार्थत्वेनार्थवत्त्वोपपत्तेर्नोपसंहारकत्वम्, तद्वदि-हाप्यर्थवादरूपस्य वाक्यशेषस्य यथाकथंचित्स्तावकत्वसंभवेनान्यथासिद्धस्य नोपसंहारकत्वं न्याय्यमित्युपसंहारभागप्राबल्यानुसरणमेवास्थेयम्।

---

१—नगत्यैनेति ख. पु. पा.।

२—विशेषार्थवादमात्रमिति मु. पु. पा.।

३—सर्वप्रदानाधिकरणगतमिदं वार्तिकम् १-३-४-१४।

## अत्रार्थे तत्सिद्धिपेटिकागतभूमशब्दस्योपन्यासः ।

अत एव विशेषनिष्ठस्याप्युपक्रमस्योपसंहारानुसारेण सामान्यपरत्व-मभ्युपगतं लक्ष्यते तत्सिद्धिपेटिकायाम् ।

## भूमाधिकरणप्रतिपाद्यनिर्देशः ।

तत्र हि 'सृष्टीरु पदधाती' तै. सं ५-३-४-७, त्यत्र सृष्टिशब्दस्य 'तद्वाना-सामुपधानो मन्त्र इष्टकासु लुक्च मतो रि' पा. सू. त्यनुशासनवित्तसृभि-रस्तुवत, ब्रह्मासृज्यत, पंचभिरस्तुवत, भूतान्यसृज्यन्ते' तै. सं. ४-३-१० त्यादिसृष्टिलिंगकमन्त्रोपधेयेष्टकार्थस्य 'एकयास्तुवत, प्रजा अधीयंते'त्याद्यनु-वाकोक्तसृष्टिलिंगकासृष्टिलिंगकमंत्रोपधेयानामिष्टकानां प्रत्येकं स्तुतिं कृत्वा 'यत्सप्तदशेष्टका उपदधाती'त्युपसंहारानुसारेणा तदनुवाकाम्नातसृष्टिलिंग-कासृष्टिलिंगकमंत्रोपधेयानामिष्टकानां समुदाये सामान्यरूपेण लक्षणांगी-कृता—इति ।

## ज्योतिष्टोमाधिकरणवर्णनम् ।

अत्रोच्यते । ज्योतिष्टोमाधिकरणे तावदुपसंहारानुसरणमुपक्रमा-कांक्षायैव, उपक्रमश्रुतस्य ज्योतिष्टोमनाम्नो' हि यागे प्रवर्तमानस्य किंचित्प्रवृत्तिनिमित्तमाकांक्षितम् । न च तदाकांक्षितं समर्पयति वाक्यशेषे तदवधीर्य, ज्योतिषामग्नीनां स्तोमः—समूहो यस्मिन्नित्यादिदीक्षणीयाद्यनु-वृत्तं किंचित्पुरुषबुद्धया कल्पयितुं युक्तम् । वाक्यशेषश्च सोमयागगतमेव-प्रवृत्तिनिमित्तं समर्पयति, ज्योतिःशब्दितत्रिवृदादिस्तोमसंबंधस्य, ग्रहम् वा गृहीत्वा, चमसं वीन्नीय, स्तोत्रमुकुर्यादिति वाक्यांतरे सोमयाग एव-निर्ज्ञातत्वात् । अतो यत्र वाक्यशेषः, तत्र ज्योतिष्टोमनाम 'यत्र च तत्, तत्र यजिः क्लृप्तप्रवृत्तिनिमित्तनामपरतंत्रत्वादाख्यातस्येति, उपक्रमाकांक्षानु-सृतोपसंहारकारितः संकोचः, नोपसंहारप्राबल्यकारितः ।

## उपक्रमस्याकांक्षाभावे संकोचो नेति अनिष्टापादनम्

अतएव यत्रोपक्रमस्य नाकांक्षा, न तत्र सत्यप्युपसंहारे विशेषसंकीर्तने न तदनुसारेणोपक्रमस्य संकोच उपेयते । यथा 'एष वाव प्रथमः ( यज्ञः )

यज्ञानाम्, यज्ज्योतिष्टोमः, य एतेनानिष्ट्वा, अन्येन यजेत' तां. ब्रा. १६,१,२, इत्यत्रान्यशब्दस्य 'यो हि त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति। यः पञ्चदशः स तम्, यः सप्तदशः, स, तम् य एकविंशः, स तमिति-त्रिवृदाद्येकस्तोमक्रतुसंकीर्तनेपि, न तद्विषयतया संकोच उपेयते। उपक्रमस्य आकांक्षाविरहेप्युपसंहारप्राबल्यादेव तदर्पितविशेषपर्यवसानमभ्युपगच्छतः तत्राप्यन्यशब्दस्य त्रिवृदाद्येकैकस्तोमक्रतुमात्रपरत्वम्, त्रिवृदादिचतुष्टयांतर्गतस्तोमयुक्तक्रतुमात्रपरत्वं वाक्यादिति, तेषामेव ज्योतिष्टोमपाश्चात्यत्वनियमः सिध्येत्। त्रिवृदादिस्तोमचतुष्टयसंबंधरहितानां चतुर्विंशस्तोम-पंचविंशाग्निष्टोमादीनां ज्योतिष्टोमात्पूर्वमप्यनुष्ठानं स्यात्। न चेष्टापत्तिः, पंचमे 'एकस्तोमे वा क्रतुसंयोगात्सर्वेषां वा चोदनाविशेषात् प्रशंसा स्तोमानामि' मी. द ५,३,४४-४५ ति पूर्वोत्तरपक्षाभ्यां सूत्रकृतैवात्र वाक्यशेषानुसारेण संकोचनिरासात्। तस्मादुपसंहारप्राबल्यवादिनस्तत्रापि संकोचः स्यात्, उपक्रमाकांक्षाया अतंत्रत्वादिति, तदधिकरणविरोधो वज्रलेपायितः।

## अत्रैवोदाहरणान्तरम्

नावमिकाधिकरणे तु उपसंहारानुसरणमसिद्धमनपेक्ष्योपसंहारम् विध्युद्देशपर्यालोचनयैव प्रागुत्तमादन्हः पत्नीसंयाजांतत्वविधिरिति सिद्धेः। तथाहि 'द्वादशाहेन प्रजाकामंयाजयेदि'ति द्वादश सोमयागाः सह कार्यत्वेन विहिताः। तत्र तेषां सहत्वसिद्धये पूर्वं पूर्वमहः क्वचित्पदार्थेऽवस्थाप्य, परं परमुपक्रमितव्यम्। तत्रानियमेन यत्र क्वचन पदार्थेऽवस्थापने प्राप्ते पत्नीसंयाजांतानि पूर्वपूर्वाण्यहानि कृत्वोत्तरमुत्तरमारभेतेत्येवं एकादशानामह्नां पत्नीसंयाजांतत्वविधौ नियमविधिर्भवति, उत्तमस्याह्नः पत्नीसंयाजांतत्वविधावत्यंताप्राप्तविधिः स्यात्, अप्राप्तविधानाच्च नियमविधानं बलीयः, विधिलाघवात्। अतो विशेषश्रवणाभावेपि पत्नीसंयाजांतत्वविधिः प्रागुत्तमादह्न इति सिद्ध्यति, किमत्रोपसंहारानुसरणेन।

---

१—उपसंहारेणसंकोच इति ख. पु. पा.

२—अभिधाने इति ख. पु. पा.

३—स्तोत्रसंबन्धस्येति. मु. पु. पा.

४—यज्ञः, यज्ज्योतिष्टोम इति ताण्ड्यब्राह्मणे नास्ति, परं मीमांसकैस्तथैवोल्लिख्यत इति बोध्यम्।

## उपसंहारस्यानपेक्षणेऽपि उपक्रमस्य पर्यवसानमिति वर्णनम्

अत एवो'पांशु यजुषे'ति वाक्यं निगदाधिकरणोदाहृतम्, वेदोपक्रमाभावात्। मंत्रविशेषस्य यजुषः उपांशुत्वविधायकत्वमिति मन्यमानैर्यजुषेत्यविशेषश्रवणेपि विशेषोपस्थापकोपसंहाराभावेपि, नियमविधिबलीयस्त्वादेव निगदातिरिक्तस्य यजुषोयमुपांशुत्वविधिरिति दर्शितं निगदाधिकरणे यत्रानियमेनोपांशुत्वं प्राप्तम्, तत्र नियममात्रमुपांशु यजुषेत्यनेन क्रियते, निगदव्यतिरिक्तेष्वेव यजुष्षु येन केनचित्स्वरेण कार्यसिद्धेरुपांशुत्वस्य नियमाप्राप्तिरिति तद्विषयमेवेदं वचनम्। निगदेषु 'प्रोक्षणीरासादये'त्यादिषु परसंबोधनलक्षणकार्यवशेन उच्चैष्ट्वमेव प्राप्तम्, न पक्षेप्युपांशुत्वमिति, न तत्रास्य वचनस्य व्यापारः। एवं चार्थतः प्राप्ते उच्चैस्त्वे उच्चैर्निगदेनेत्यनुवादमात्रमिति।

## तेषामर्थाधिकरणार्थोपन्यासेनोपसंहारानुसरणे नोपक्रमस्य संकोचः

तेषामर्थाधिकरणे च 'व्रीहीनवहंती'त्यत्र व्रीहिपदस्यापूर्वसाधनमात्रपरत्वेपि नावधातस्याव्यसान्नाय्यसाधारण्यम्। तत्रावघातस्य पक्षे[1] प्राप्त्यभावेनात्यंताप्राप्तविधानतो विधिगौरवापत्तेरिति व्रीहियवमात्रविषयत्वं नियमविधिबलीयस्त्वादाश्रितम्। किंच तत्रैवाधिकरणे व्रिहियवाभ्यां वैतुष्यार्थम् अवघातोऽपेक्षितः, नाव्यसान्नाय्याभ्यामित्यपेक्षितविधेरनपेक्षितविधानदौर्बल्यन्यायेनाप्यवघातस्य ओषधद्रव्यमात्रविषयत्वं दर्शितम्। तद्वदिहाप्येकादर्शाभरहोभिः सहत्वसिद्धये पत्नीसंयाजान्तत्वमपेक्षितम्, नोत्तमेनाह्ने ति। तेनापि न्यायेन प्रागुत्तमादह्नः पत्नीसंयाजांतत्वविधिरिति सिध्यति। अतस्तत्र वाक्यशेषानुग्रहोऽभ्युच्चयमात्रमिति, तत्रैवाधिकरणे स्फुटम्।

## उक्तस्यार्थस्य निगमनम्

यत्तु-'सृष्टीरुपदधाती'त्यत्र उपसंहारानुसारेण समुदायलक्षणाश्रयणम्, तदनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायात्, बहुबाधादल्प-

---

१—पक्षेऽपीति मु. पु. पा.

बाधो वरमिति न्यायाच्च ! तल्लक्षणानाश्रयणे हि प्रत्येकमसृष्टिलिंगकमंत्रोपधेयेष्टकास्तुतीनाम्, इष्टकासाम्प्रदश्यकीर्तनस्य च सर्वथा बाधः स्यात्। ततो वरमेकस्य सृष्टिशब्दस्य लक्षणेति। तस्मात्सामान्यविशेषविषययोरुपक्रमापसंहारयोरुपसंहारानुसरणेन तत्प्राबल्यवर्णनमयुक्तम्।

## छागपशुन्यायस्योपन्यासः

एतेन—छागय शुन्या[1]योदाहरणमपि निराकृतम्, तत्राप्यनुष्ठानाय विधेर्विशेषाकांक्षयैव मंत्रार्पितविशेषेपर्यवसानाभ्युपगमात्। नन्वर्थवादान्वयं विना विधेरपर्यवसानात्तदर्पितविशेषग्रहणं युक्तम्। मंत्रार्पितविशेषग्रहणंतु कथं स्यात्, तदन्वयात्प्रागेवानियतविशेषकल्पनया विधिपर्यवसानसंभवादिति चेत्। न। पर्यवसितस्यापि विधेः प्रत्यक्षविशेषे सत्याक्षेपायोगाद्विधिमंत्रयोरेकार्थविषयत्वनियमात् पशुत्वसामान्यस्य कृत्स्नस्य छागे सद्भावाविरोधेन कांस्यभोजनन्यायावताराननियमसंभवे, अनियमानुपपत्तेश्च मंत्रार्पितविशेषग्राहकत्वात्।

अतएव स्थितेप्यक्ताधिकरणेप्यपर्यवसितं सामान्यं श्रुतविशेषे पर्यवस्यतु, पर्यवसितंतु न संकोचनीयमित्यधिकाशंकायां छागपशुन्यायावतारः। दृष्टं च पर्यवसितस्यापि 'अग्निहोत्रं जुहाती'तिविधेरनि[1]यतद्रव्यदेवताक्षेपं विना 'पयसा जुहोति, यदग्नये च प्रजापतये च सायं जुहोती' त्यादिवाक्यांतरविधेय द्रव्यदेवताग्राहकत्वम्। अन्यथातत्राप्याक्षेपेणा नियतद्रव्यविशेषादिकल्पनयैवपर्यवसानात्। उत्पत्तिशिष्टगुणावरोधन्यायेनवाक्यांतरविधेयद्रव्यविशेषाद्यन्वयो न स्यात्। तस्मात्तद्वदेवश्रुत विशेषेसत्यापानवतारात्तदाकांक्षयैवमंत्रार्पितविशेषपर्यवसानम् नोपसंहारप्राबल्यात्। यदि च 'योदीक्षितोयदग्नीषोमीयं पशुमालभेत ए.ब्रा.६-३ इत्ययंविधिः स्वाकांक्षय[1]विनोपसंहारप्राबल्यादेव पशुसामान्यं परित्यज्यमंत्रार्पितंछागंद्रव्यतया गृह्णीयात्, तदाग्नीषोमावपिपरित्यज्येत्वंह्यग्नेप्रथमोमनो ऋ.सं.४.४.३५ तेतिमनोता मंत्रार्तितमुपनयतमेध्या दुरः आशासानामेधपतयेमेध तं.ब्रा. ३.६.६ त्यधिप्रमुप्रषगतदेवतापदेकवचनांतमेधपति शब्दोपोद्बलितं च

१—उपसंहारप्राबल्ये तर्कताण्डवाद्युक्तं छागपशुन्यायमनूद्य निरस्यति 'एतेनेत्यादिना निराकृतमि'त्यन्तेन।

केवलाग्निमेव देवतात्वेन गृह्णीयात्, न चेष्टापत्तिः। दशमे[1] मनोताधिकरणे मनोतामंत्रस्थाग्निशब्दस्यैकदेशद्वाराग्नीषोमप्रकाशकत्वस्य नवमे मेधकरण ९.३.१३ मेधपतयइत्येकवचनस्याग्निषोमोभयव्यासक्तदैवतात्वैक्याभिप्रायत्वस्य च समर्थितत्वात्। न च मनोतामंत्रे केवलाग्निशब्दप्रयोगेप्यग्नीषोमाभ्यां छागस्येत्यादिमंत्रान्तरेष्वग्नीषोमपदप्रयोगात् मेधपतिशब्दस्य क्वचिच्छाखायामेकवचनांतपाठेपि शाखांतरेद्विवचनांतपाठाच्च विध्यनुगुणमंत्रसद्भावे तदननुगुणमंत्रार्पितग्रहणमपि नोपेयत इति वाच्यम्। तथा सति द्रव्यविषयेपि—इमं पशुं पशुपते ते,[1] पाञ्चात्पशुं प्रमुंचते. तै. सं. ३-१-४ त्याद्यनुगुणमंत्रसद्भावादननुगुणमंत्रार्पितछागग्रहणमपि न स्यात्। तस्माद्देवताविषये आकांक्षाविरहान्मंत्रार्पितस्याग्रहणम्। द्रव्यविषये तत्सत्वान्मंत्रार्पितस्य ग्रहणमित्येव विशेषो वक्तव्यः। अतएव 'व्रीहिभिर्यजेते' तिविधिर्धान्यमसी तै.सं.१-६-९ तिमंत्रार्पितसामान्यग्रहणामनुष्ठानाय विशेषाकांक्षाया इव सामान्य कांक्षाविरहात्। अयुक्तश्चाकांक्षाभावे पदार्थस्य मंत्रानुसारेण संकोचः। मंत्रोह्यनुष्ठानकाले पदार्थं प्रकाशयन् पदार्थशेषः। न च शेषानुसारेण शेषिसंकोचोयुक्तः। अन्यथा।

'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि।

तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः 'तै० ब्रा० ३-७-५ इति व्रीहिलिंगकमंत्रानुसारेण सदनकरणप्रतिष्ठापने व्रीहिपुरोडाशे संकुचिते कल्पनीय इति, यवपुरोडाशे न स्याताम्। तस्माद्यथा तत्र गुणानुसारेण प्रधानसंकोचायोगाद्यवपक्षेपि सदनकरणप्रतिष्ठापने, मंत्रः परम् व्रीहिपक्ष इति व्यवस्था। तथाऽत्रापि सर्वोऽपि पशवो द्रव्याणि, मंत्रः परं छागपक्ष इत्येव स्यात्। यदि विध्यर्थाकांक्षानुसरणं न स्यात्।

## आकांक्षयैव विशेषपूरणमन्यथेन्द्रापीताधिकरणसिद्धान्तविरोधो पन्यासः

निराकृत श्चसाक्षादिन्द्रपीताधिकरणे निराकांक्षस्यमन्त्रविधेर्मन्त्रलिंगानुसारेण संकोचः। तत्र हि 'सोमेन यजेते'त्यत्राविशेषेण ऐन्द्रानैंद्रप्रदान-

१—'मनोतायां वचनादविकारस्स्यादि' मी.द.१०-४-३४ इत्यत्रेति शेषः।

२—देवतैक्येति मु. पु. पा.।

३—ऽद्येति मु. पु.पा.।

रूपसर्वाभ्यासानुवृत्तज्योतिष्टोमयागांगत्वेन विहितस्य सोमद्रव्यस्य इन्द्राय त्वा वृत्रघ्ने 'इंद्राय त्वा वसुमते सोमं गृह्णामी मै.सं.४ ५ ४ति मान–ग्रहण मंत्रानुसारेणेन्द्रैप्रदानविषयतया संकोचमाशंक्य, गुणानुसारेण प्रधान-संकोचो न युक्तः, कामं मंत्र ऐन्द्रविषयः स्यादिति व्यवस्थापितम्। निराकांक्ष-स्यापि विधेरुपसंहारप्राबल्येन संकोचमभ्युपगच्छतस्तत्रापि संकोचो न स्यादिति, तदधिकरणविरोधो वज्रलेपायत इत्यलं विस्तरेण।

## उपसंहारप्राबल्यस्य स्वप्रातिकूल्यमिति वर्णनम्

किंच विधेर्मंत्रानुसारेण[1] पर्यवसाननियमाभ्युपगमेपि न तत उपसंहार-प्राबल्यम्, मंत्रस्य विध्युपसंहारत्वाभावात्। एकवाक्यतया पूर्वापरभावेनाम्ना-तयोर्हि उपक्रमोपसंहारभावः, नच विधि–मंत्रयोः पूर्वापरभावनियमोऽस्ति। नच यत्र तत्र स्थितस्यापि मंत्रस्य विधिप्रापितानुष्ठेयप्रकाशकतया तदनुवाद-रूपतैव तदुपसंहारत्वम्, तथात्वे 'यथाप्राप्त्यनुवाद इति न्यायेन पुरोवादा-नुवादयोः पुरोवादस्य प्रबलतयोपक्रमस्यैव प्राबल्यमापतेदित्यनुवादस्योप-संहारत्वपरिभाषायाः स्वप्रतिकूलत्वादिति दिक्।

## उपसंहारप्राबल्यनिरासः

यत्तू श्येनाक्ये उपसंहारप्राबल्यमुदाहृतम्। तदप्ययुक्तम्। तत्रापि श्येन-शब्दस्य यागनामत्वा[3]य ज्योतिष्टोमनाम्न इव प्रवृत्तिनिमित्तापेक्षानुरोधेनैव वाक्यशेषोपदर्शितसादृश्यावलंबनेन गौणत्वांगीकारात्। अन्यथा श्येन-शब्दस्य रूढ्या पक्षिपरत्वे कर्ममात्रविधिस्वीकारे गुणश्रवणवैयर्थ्यापत्तेः, 'कर्मणि गुणविधिस्वीकारे फलश्रवणवैयर्थ्यापत्तेः, । फलाय गुणविशिष्टकर्म-विधिस्वीकारे विशिष्टविधिगौरवापत्तेः। फले कर्मणः, कर्मणि गुणस्य च विधि-

---

१—उपसंहारप्राबल्यवादिनश्चन्द्रिकादिकृन्मते इन्द्रपीताधिकरणविरोधः दुष्परिहर इत्याह—निराकृतश्चेत्यादिना। २—पर्यवसाननियमाभ्युपगममपीति ख.पु.।

३—निष्पादनात्येति ख. पु.।

४—'विशिष्टविधिपक्षे तु भवेन्मत्वर्थलक्षणा,
सोमादौ गत्यभावात् सा नत्वत्र गतिसंभवात्।
धातोरत्यन्तपारार्थ्याद्विप्रकृष्टविधेस्तथा ,
फले कर्मणि वा नेहगुणो वाक्ये विधीयते' इति।
शास्त्रदीपिकागतंमुक्तिदधिकरणस्थपद्यार्थोऽत्रानुसन्धेयः।

स्वीकारे वैरूप्येन विरुद्धत्रिकद्वयापत्तेः, कर्माश्रित्य फलाय गुणविधिस्वीकारे विप्रकृष्टविधानस्य, धातोरत्यंतपारार्थ्यस्य चापत्तेः, वाक्यशेषोपदर्शितश्येनसादृश्येन श्येनशब्दस्य यागे गौणनामत्वे संभवति, 'सोमेन यजेत, दध्नेन्द्रियकामस्य जुहुयादि'त्यादिवदनन्यगतिकविशिष्टविधित्वादिकल्पनायोगात्। अत उदाहृतसर्वदोषपरिहाराय श्येनशब्दस्य यागनामत्वसिद्धये प्रवृत्तिनिमित्ताकांक्षयैव वाक्यशेषानुसरणम्।

## उपक्रमस्याकांक्षाभावे उपसंहारस्याननुसरणम्।

अत एव यत्रोपक्रमस्यानाकांक्षा, तत्र तद्विरुद्धार्थोपस्थापकोपसंहारानुसरणं न क्रियते। यथा 'अवकाभिरग्निं विकर्षति' त्यत्रावकाशब्दस्य 'आपो वै शांताः' इति वाक्यशेषानुसारेणाऽप्सु लक्षणा नोपेयते। अर्थवादाधिकरणे गुणवाद मी.द. १-२-१० सूत्रेणापो वै शांताः' इत्यभिजनस्तुद्वारेणावकानामेव स्तुतिरिति, विधिस्तुत्योर्वैयधिकरण्यपरिहारात्।

## नैवारचरोराधानार्थताधिकरणार्थविवरणम्।

यथा वाऽग्निचयने'नैवारं चरुमुपदधाती'त्यस्य स्थण्डिलनिर्वृत्त्यौपयिकयथाश्रुतचरूपधानविधानेन निराकांक्षस्य'बृहस्पतेर्वा एतदन्नम्, यन्नीवाराः' इत्युपधानरूपगुणकर्मानन्वयिदेवतासंबंधप्रतिपादकवाक्यशेषानुसारेण यागविधायकत्वं नांगीक्रियते। 'संयुक्तस्त्वर्थशब्देने मी. द. २, ३, १२ ति द्वैतीयीकाधिकरणे उपक्रमग्य नैराकाक्ष्याद्वाक्यशेषस्य देवतासमर्पकत्वम् निराकृत्य,बृहस्पतिपदस्य ब्राह्मणपरत्वांगीकारेण तदन्नतया नीवारस्तुतिपरत्वनिर्णयात्। उपसंहारप्राबल्यवादिनस्त्ववकाशब्दस्याप्सु लक्षणा, 'चरुमुपदधातीत्यस्य यागविधायकत्वञ्च स्यात्, तस्मात्तत्र निराकांक्षस्य वाक्यशेषानुसरणनिराकरणात्, इह श्येनवाक्ये उपक्रमाकांक्षयैवोपसंहारानुसरणम्, अभ्युपेत्य चेदमुक्तम्—मीमांसकैर्विध्याकांक्षयोपसंहारानुसरणम् श्येनवाक्ये—इति।

## अत्र मखीन्द्राणां प्रकारान्तरेण समाधानम्।

वस्तुतस्तत्रोपक्रमानुसारेणोपसंहार एवाऽन्यथा नीतः। [1]'उपसंहारस्य

---

[1] अत्रत्यो विषयस्समग्रोऽप्यनूद्य प्रभावल्यामनूद्य निराकृतश्शम्भुभट्टीये पृ० १८-९९।

पक्षिपरत्व एवांजस्येन यागपरत्वे तदनांजस्यात्। तथाहि- पक्षद्वयेऽपि तावत्तत्रोपमानभागस्य यथा श्येनपक्षी निपत्य मत्स्यादिकमादत्त इत्यर्थः। तत्र मत्स्यादिकमित्यस्यानुपादानेपि प्रसिद्धस्यैव दृष्टांतीकर्तव्यतया तल्लाभात्। उपमेयभागस्य त्वेवमयं यजमानस्य शत्रुं मारयतीत्यर्थः। पक्षिणि, यागे-चोभयत्रापि शत्रोर्मुख्यस्य निपत्यादानस्यासंभवात्। पक्षिपक्षे फले, यागे वा-साधनत्वेन विनियुक्तस्य पक्षिणः शत्रोरादाने व्यापारासंभवात्। यागपक्षे क्रियायां निपतनादानक्रिययोः सर्वथैवासंभवाच्च। एवं च वाक्यशेषस्य पक्षिपरत्वे यथा श्येनः पक्षी निपत्य मत्स्यादिकमादत्ते, एवमयं फले, यागे वा विनियुक्तः श्येनः पक्षी यजमानस्य शत्रुं मारयतीत्यर्थः। अत्र श्येनपक्षि-निष्ठयोर्लोकप्रसिद्धमत्स्याद्यादान – विध्युद्देशोपात्तद्विषन्मारणयोरेवोपमानोप मेयभावः प्रतीयते, न तु श्येनस्यैव श्येनेनेति, नाभेदेन सादृश्यानुपपत्तिः। यद्यपि तयोः साधारणधर्मो नोपात्तः। तथापि यथा जले स्वच्छन्दं विहरतः मत्स्यस्य श्येनकृतनिपत्यादानं झटित्यशंकितोपस्थितं भवति, तथा तत्कृतम् द्विषतोमारणमपीति गम्यसाधारणधर्मोऽस्त्येव। तथा च 'यथा कप्यासम् पुंडरीकमेवमस्याक्षिणी' छा. उ. १-६-७। त्यादाविव गम्यसाधारणधर्मेणो-पमानोपमेयभावनिर्देशेपि न काचिदनुपपत्तिः।

## पक्षिपरत्व एवार्थवादाञ्जस्येऽप्युपक्रमे श्येननामत्वनिर्ण-येन तदनुसारेणोपसंहारनयनमिति निरूपणम्।

अवश्यञ्चे तस्य साधारणाधर्मस्य गम्यत्वं पक्षांतरेप्यभ्युपगंतव्यम्। अन्यथा द्विषन्मारणमात्रस्य विध्युद्देशादेवावगतत्वेन, वाक्यशेषात् दृष्टांत-बलेन तदनवगतशैघ्र्यानवगमे ततः प्रवृत्तिविशेषकरस्तुतिविशेषालाभ-प्रसंगात्। तथा च लोके प्रच्छन्नतया गृहं प्रविश्य, प्रच्छन्नतयैव निर्गते चैत्रे, तस्य प्रच्छन्नतया गृहप्रवेशमात्रं जानानमन्यं प्रति, यथा देवदत्तो गृहम् प्रविष्टः, तथैव निर्गत इति वाक्येन देवदत्तनिष्ठयोरेव प्रवेश-निर्गमनक्रिययोः प्रच्छन्नकृतत्वरूपगम्यसाधारणधर्मेणोपमानोपमेयभाव उच्यते, न तु देव-दत्तस्यैव देवदत्तेनेति मुख्य एवोपमानोपमेयभावः, तथात्रापीत्युप-पद्यते।

अयमित्यस्य च सन्निहितप्रथमांतपदोक्तपक्षिपरत्वेनार्जवं लभ्यते। यागपरत्वे तु वाक्यशेषस्यायमित्यस्य व्यवहितयज्युपात्तकरणपरामर्शित्वेन

अनार्जवं स्यात् । पक्षियागयोश्चामुख्य उपमानोपमेयभावस्स्यात् । अनुगतसाधारणधर्माभावेन मुख्यसादृश्यासंभवात् पक्षिणि मत्स्यादिकर्मकम् मुख्यं निपत्यादानम् । यागे तु भ्रातृव्यकर्मकं मारणमेवाशंकितोपस्थितिकत्वगुणयोगात् तथोपचरितम् । मुख्यं निपत्यादानमिति तत्प्रयोज्यम् पक्षियागयोरमुख्यमेव पक्षिसादृश्यम् । न च यागपरत्वपक्षेपि पक्षियागगतयोर्मत्स्यादान-भ्रातृव्यमारणयोरेवोपमानोपमेयत्वमुच्यतामिति वाच्यम् । तावता यागे श्येनशब्दप्रवृत्तिनिमित्तस्य उपमानसादृश्यस्यालाभात्, उपसंहारानुसारेण श्येनशब्दगौणत्वोक्त्ययोगात् । तस्मादुपक्रमे लाघवाद्यनुसारेण यागमात्रविधिनिर्वाहाय श्येनशब्दस्य[1] यागनामत्वसिद्धये प्रवृत्तिनिमित्तापेक्षायामन्यत्र रूढस्य तत्र मुख्यप्रवृत्तिनिमित्तासंभवेऽपि गौणप्रवृत्तिनिमित्तलाभायोपक्रमाकांक्षानुसारेणैव वाक्यशेषे अयमित्यस्य व्यवहितकरणपरामर्शित्वम्, वाक्यशेषस्यामुख्यसादृश्यपरत्वञ्च कल्पितमिति, तत्रोपक्रमानुसारेणोपसंहारो नोत इत्येव युक्तम् ।

## पूर्वपक्षिणोक्तस्य वैश्वानरवाक्ये उपसंहारप्राबल्यस्य निरासः

[2]यत्तु—वैश्वानरवाक्ये उपसंहारप्राबल्यमुदाहृतम् । तदतितुच्छम् । न हि तत्रोपसंहारानुसारेण उपक्रमे श्रुतस्य कस्यचिदुपमर्दोस्ति, उपक्रमावगतपुत्रजननिमित्तत्वापरित्यागेनैव रात्रिसत्रन्यायेन वाक्यशेषावगतफलस्यापि स्वीकारात् । तत्स्वीकारोपि विध्यकांक्षयैव प्रवर्तकस्यैव विधेः फलविशेषसाधनत्वज्ञानं विना पुरुषस्याऽप्रवृत्त्या [3]प्रवर्तकत्वापर्यवसानात् । अत एवन्यतः प्रवृत्तिलाभेन विधेराकांक्षाविरहात्पर्णमयीवाक्यशेषे श्रुतस्याप्यपापश्लोकश्रवणादेर्नतत्फलत्वमुपेयते ।

## उपसंहारप्राबल्यवादिनोमतेऽस्वारस्यकथनम्

वस्तुतस्तु वैश्वानरवाक्येप्युपक्रमप्राबल्यमेव सुवचम् 'यस्मिन्जाते इत्यादिवाक्यशेषे पुत्रेष्टि-पूतत्वभवनयोरपि वर्तमानापदेशेन तुल्यकालत्व

---

१—श्येनसादृश्यालाभादिति मु. पु. पा. ।

२—चन्द्रिकाकृतोपसंहारप्राबल्ये उदाहृतं वैश्वानरवाक्यं विघटयितुमनुवदतियत्त्वित्यादिना ।

३—प्रवर्तकत्वस्येति मु. पु. पा.

प्रतीत्या पूतत्वादेः पुत्रेष्टिफलत्वानवगमेऽपि विधेः प्रवर्तकत्वपर्यवसानाय फलविशेषाकांक्षयैवाश्रुतफलकल्पनाद्वरं श्रुतस्यैव पूतत्वादेः फलत्वविपरिणाम इति यत्पदस्य व्यत्यासेन योजनम्, णिजर्थसनर्थांर्यंतर्भावं च कल्पयित्वा यम् पूतत्वादियुक्तं भावयितुमिच्छति, तस्मिजात एतामिष्टिंनिर्वपेदिति विपरिणामेन वाक्यशेषस्य फलसमर्पकत्वाभ्युपगमात्। तस्मादुपक्रमप्राबल्य एवोदाहरणीयान्यक्ताधिकरणादीनि, [1]कथमवाचीनैरुपसंहारप्राबल्ये उदाहृतानीति न विद्मः।

## अधिकरणान्तरे उपसंहारप्राबल्यवादिमतेन शंका

ननु [2]प्रस्तरप्रहरणे सूक्तवाकमंत्रगतायुरादीनां फलत्वमुपगतम्। [3]तत्र विध्याकांक्षया अंगतयाऽन्यतः प्रवृत्तिलाभेन तद्विरहादिति, तत्र मंत्ररूपोपसंहारप्राबल्यमेवोपासनीयम्। उच्यते। न मंत्रप्रकाश्यत्वेन तत्र तेषां फलत्वम्।

## आयुरादीनां फलत्वं श्रुतिविनियोगेन, नतु मन्त्रप्रकाश्येत्वेनेति कथनम्

किंतु श्रुतिविनियुक्तकृत्स्नसूक्तवाकमंत्रकरणत्वान्यथानुपपत्त्या[4] 'सूक्तवाकेन प्रस्तरं प्रहरती'ति कृत्स्नसूक्तवाकः प्रस्तरप्रहरणे विनियुक्तः। न चाऽसौ साक्षात्प्रहरणं प्रकाशयितुं शक्नोति, नापि तत्साधनं प्रस्तरम्। तस्मात् ज्ञायते—यदनेन प्रकाश्यते तत्प्रहरणसंबंधीति। नह्यन्यथा श्रुत्यवगतम् कृत्स्नस्य सूक्तवाकस्य प्रहरणांगत्वं घटते। क्रिया—तत्संबंधिप्रकाशनेनैव हि मंत्रस्य करणता। सूक्तवाकेन चाग्न्यादयो देवताः प्रकाश्यन्ते, आयुरादीनि च फलानि, तत्र देवता साधनतां पतिपद्यन्ते, फलानि साध्यत्वम्। इत्थमेव नावमिके सूक्तवाकाधिकरणे मी. द. ९-१-४१ आयुरादीनाम् फलत्वव्यवस्थापनं कृतम्, न मंत्रप्रकाश्यत्वमात्रेण।

'उरु प्रथस्वउरु ते यज्ञपतिः प्रथतामि, श. वा. १-१-६-८ ति लिंगवि-

१—चन्द्रिकाकारादिभिरिति शेषः।

२—प्रहरणमिति मु. पु. पा.

३—तन्त्रेति मु. पु. पा.

४—प्रकरणत्वान्यथानुपपत्त्येति मु. पु. पा.

नियोज्यमंत्रप्रकाश्यस्य यज्ञपतिप्रथनस्य हि पुरोडाशप्रथनफलत्वम् निराकृतं मंत्राधिकरणभाष्ये[1]।

## नहि निन्दान्यायविवेचनम्

ननु तथाप्यन्यदस्ति उदाहरणोमुपसंहारप्राबल्ये। तथाहि दशमे 'न चेदन्तयं प्रकल्पयेत् प्रक्लृप्तावर्थवादस्स्यादानर्थक्यात्परसामर्थ्याच्चे'त्य मी. द. १०-८-७ धिकरणे अग्निहोत्रं प्रकृत्य श्रुतेन 'जर्तिलयवाग्वा वा जुहुयात्, गवेधुकयवाग्वा वा, न ग्राम्यान्पशून् हिनस्ति, नारण्यानि 'तै. बा. ५-४-३ ति वाक्येन जर्तिलगवेधुकशब्दवाच्यारण्यतिलारण्यगोधूमकृतयवाग्वोर्विकल्पेनाग्निहोत्रहोमे द्रव्यत्वविधाने लिङ्विभक्तिबलेन ग्राम्यारण्यपशुहिंसारहिततया तयोस्तवनेन च प्रतीयमानेपि 'अथोखल्वाहुः, अनाहुतिर्वै जर्तिलाश्च गवेधुकाश्च, 'पयसाऽग्निहोत्रं जुहुयादिति तदनंतरं 'जर्तिलादिप्रतिक्षेपेण पयोविधिदर्शनात्, तदेकवाक्यतया 'जर्तिलयवाग्वा वा जुहुयादि'त्यादेः ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्ततया होमार्हाणामपि जर्तिलगवीधुकानाम् पयोऽपेक्षया दुष्टत्वात्पयः प्रशस्तमिति पयस्तुतिलक्षकत्वप्रदर्शनेनोपसंहारप्राबल्यमाश्रितम।

नचानर्थक्यहेतुना सूत्रकृता पयस्तुतिपरत्वमुक्तम्, नोपसंहारानुसारेणेति वाच्यम्। पयसा सह विकल्पार्थं जर्तिलादिविधानसंभवेन-आनर्थक्याभावात्। तेन हेतुना 'जर्तिलयवाग्वा वजुहुयादि'त्यादेः पयस्तुत्यर्थत्वासिद्धेः। 'अनाहुतिर्वैजर्तिलाश्चे'त्यादेः जर्तिलादिनिषेधरूपत्वमेव, न तु पयस्तुत्यर्थत्वमिति शंकायां विहितजर्तिलानिदिषेधस्य ग्रहण ग्रहणवद्विकल्पार्थकत्वाद्विकल्पस्य च 'पयसा जुहुयादि'ति द्रव्यांतरविधानादेव च सिद्धेर्निषेधानर्थक्यात्। नहि निंदान्यायेन पयोविधिस्तुत्यर्थतैवेत्यानर्थक्यहेतोरनाहूतिर्वा इत्यादिमात्रस्य पयस्तुत्यर्थतागमकत्वात्। 'शिष्ट्वा तु प्रतिषेधस्यादि' मी. द. १०-८-६ ति पूर्वाधिकरणे।

---

१—'अर्थवादो' वा १-२-२३ गुणसूत्रस्य भाष्ये नायं मन्त्रस्य विधिः, न संस्तवर्तः प्रथनमेव स्तूयते, तत्र प्रथनं स्तोतुमित्यत्रेति शेषः।

२—चयनप्रकरणगतं तैत्तिरीयसंहितायां 'मजक्षीरेण जुहोती'ति पाठः। दीक्षितेन्द्रैश्शाबरभाष्यनुसारेण मैत्रीयणीयपाठ उदाहृत इति बोध्यम्।

## अतिरात्रन्यायनिरूपणम् ।

'अतिरात्रे षोडशिनं गृह्णाती'ति विधाय, आम्नातो 'नातिरात्रे षोडशिनम् गृह्णाती'त्ययं तत्प्रतिषेधः, न तु नानूयाजेष्वित्यादिवत्पर्युदासादिरूप इत्युक्ते तर्हि तद्वदेव 'अनाहुतिर्वा' इत्ययमपि प्रतिषेध इति शंकायाम्, तन्निराकरणाय सूत्रप्रवृत्तेश्च । तथा चास्मिन्सूत्रे 'शिष्टे वा तु प्रतिषेधः स्यादि' मी० द० १०-८-६ ति पूर्वसूत्रानुषंगेण 'न चेदन्यं विधिं कल्पयेद्यत्र प्रत्यक्षो विधिः सन्निहितो नस्यात्, ततः षोडशिग्रहणाग्रहणवदेकेन शिष्ट्वा, परेण प्रतिषेधः स्यात् । इह तु 'पयसाग्निहोत्रं जुहुयात्' इति विध्यंतरस्य क्लृप्तत्वात्तच्छेषभूतोऽयमर्थवादः स्यात । विहितप्रतिषेधफलस्य विकल्पस्य पयोरूपद्रव्यांतरविधानादेव सिद्धेः, प्रतिषेधानर्थक्यादित्युक्ते, जर्तिलाद्यनाहुतित्वकीर्तनस्य कथं पयःप्रशंसापरत्वमिति शंकाया योग्यो 'हेतुरुच्यते, परसामर्थ्यात् परेण पयोविधिना सहार्थवादत्वेनान्वये सामर्थ्यादिति तत्साधारण्यादेव 'जर्तिलयवाग्वा जुहुयादि'त्यादेः पयोविधिशेषत्वम् वक्तव्यम् । दृष्टं हि कस्य चिन्निंदायास्तदितरस्तुतौपर्यवसानवत् कस्यचिद्विधिस्तुतिपूर्वकनिंदाया अपि सहैव विधिस्तुतिभ्यामितरस्तुतौ पर्यवसानम् । यथा देवदत्तस्तावदतीव विद्वानित्युक्त्वा न तस्य बृहस्पतिरपि समान इति' च स्तुत्वा सोपि यज्ञदत्तमपेक्ष्याविद्वानित्युक्ते सर्वस्यापि यज्ञदत्तस्तुतौ पर्यवसानमिति । तथा च पाश्चात्यविधिदर्शनादुपक्रमावगतस्य जर्तिलयवाग्वादिविधेस्त्याग इत्युपसंहारप्राबल्यापेक्षणं दुर्वारमिति चेत् ।

## उपसंहारप्राबल्यशंकानिरासः ।

मैवम् । तत्रानेकादृष्टकल्पनानुबंधिवाक्यभेदपरिहाराय जर्तिलादिविधित्याग इत्युपसंहारप्राबल्यानाश्रयणात् ।

## न गिरा गिरेति नावमिकाधिकरणस्यावतारणम् ।

य'त्र ह्यनेकविधायकश्रवणम्, तत्रैकस्य विधायकत्वम्, अन्यस्यानु-

---

१—यो हेतुरिति मु. पु. पा. ।

२—उक्ताविति खपुस्तकेऽधिकः पाठः ।

३—चन्द्रिकाकृतोपसंहारप्राबल्यस्वीकारे उदाहृतानामधिकरणानां विघटनमुपक्रमते—यत्रेत्यादिना ।

वादकत्वमित्येकवाक्यत्वसंभवे वाक्यभेदावहो विधिभेदो न स्वीक्रियते। अत एव "न गिरा गिरेति ब्रूयात्, ऐरं कृत्वोद्गेयमि' तां. ब्रा. ८-६-१० त्यत्र गिरापदवाक्ये इरापदविधानादेव गिरापदनिवृत्तिसिद्धे[१]'रैरं कृत्वाद्गेयमि'त्येव विधिः, 'न गिरा गिरेति ब्रूयादि'ति तु तत्प्राप्तगिरापदनिवृत्त्यनुवाद इरापदस्य गिरापदकार्यापत्तिसिद्धये तत्कार्यलक्षणार्थः। न तु गिरापदप्रतिषेधविधिः, गिरापदप्रतिषेधमात्रादिरापदस्याप्राप्तेः 'ऐरंकृत्वाद्गेयमि'त्यस्यापि विधायकत्वापत्त्या वाक्यभेदापत्तेरित्युक्तम्।

## वाक्यभेदपरिहारायैको विधिः, अपरोऽनुवाद इत्यत्राद्यमुदाहरणम्।

अत एव च 'न चतुस्त्रिंशदितिब्रूयात्, षड्विंशतिरिति ब्रूयादि'त्यत्राश्वमेधे अश्ववंक्रीयत्ताप्रकाशनाय पठितायाः—

'चतुस्त्रिंशद्वाजिनो देवबंधोर्वंक्रीरश्वस्य स्वधितिस्समेती' तै. सं. ४-६-९ त्यस्या ऋचो न चतुस्त्रिंशदिति प्रतिषेधेन प्राप्तस्य 'षड्विंशतिरस्य वंक्रयः' इति [२]प्राकृतवंक्रिमंत्रस्य यथाप्राप्त्यनुवादमात्रं 'षड्विंशतिरित्येव ब्रूयादि'ति वचनम्, न तु प्राकृतमंत्रे षड्विंशतिपदनियमेऽपि तस्य तात्पर्यम्। तस्यापि विधाने वाक्यभेदापत्तेरिति, तूपर-गोमृगयोः, अश्वस्य च वंक्रीणां समस्य वचनस्य षडशीतिरेषां वंक्रय इत्येवंरूपस्याबाध उक्तः।

## द्वितीयमुदाहरणम्।

एवम्—'रथंतरे प्रस्तूयमाने संमीलयेत्, स्वर्दृशं प्रति वीक्षेते' तां. ब्रा. ७-७-१५ त्यादिष्वपि बहुषु स्थलेषु वाक्यभेदपरिहारायैको विधिः, अपरः

---

१—मी. द. ९-१-१७।

२—प्राकृतेति मु. पु. नास्ति।

३—मी. द. १० ४-२.

४—अर्थैकत्वाधिकरणगतस्य 'यद्दचा स्तुवते' इत्यादिसन्दर्भस्य चन्द्रिकोक्तम् योजनं व्युदसितुमनुवदति-यस्त्विति। अर्थैकत्वाधिकरणे 'यद्दचा स्तुवत' इत्यत्र

कर्तृविशेषणविधिशक्तिप्रति बन्धकयच्छब्दयुक्तोपसंहारबलेन स्वतः प्राप्तं विधिं परित्यज्योपसंहारस्थसामविधिशेष त्वस्वीकारात्। तदप्युपसंहारप्राबल्ये उदाहरणं द्रष्टव्यमिति तर्कताण्ड वोक्तमर्थं निरसितुमनुवदति-यस्त्विति।

अनुवाद इति व्यवस्थापनं दृष्टम्। एवमिहापि वाक्यभेदपरिहाराय जर्तिलादि-वाक्यस्य विधिसरूपार्थवादत्वाश्रयणमिति, नानेनोपसंहारप्राबल्यसिद्धिः।

[1]"यत्तु—क्वचिदुक्तमकर्तृत्वाधिकरणे 'यदृचा स्तुवते' इत्यस्य कर्तृविशेषण-विधिशक्त्यप्रतिबंधकयच्छन्दयुक्तस्यापि उपक्रमस्य 'य एवंविद्वान्साम्ना स्तुवीते'ति कर्तृविशेषणविधिशक्तिप्रतिबंधकयच्छब्दयुक्तोपसंहारबलेन-स्वतः प्राप्तमृग्विधानत्वं परित्यज्य, सामविधिशेषत्वस्वीकारादुपसंहार-प्राबल्यमाश्रितमिति।

तदप्यनेन निरस्तम्। तत्रापि वाक्यभेदादिदोषपरिहारार्थमौपसं-हारिकसामविधिशेषत्वस्वीकारात्। तथाहि—उपक्रमे 'यदृचा स्तुवते' तदसुरा अन्ववायन्, यत्साम्ना स्तुवते, तदसुरा नान्ववायन्निति'ऋचा स्तुतिः, साम्ना स्तुतिश्चेत्युभयं श्रूयते। न तु ऋचा स्तुतिमात्रम्। विधिस्तू-भयत्रापि न श्रूयते। तत्कल्पना चोभयत्र न संभवति, एकवाक्यत्व-संभवे वाक्यभेदस्यान्याय्यत्वात्। प्रकृते चासुरागमनहेतुत्वेन भयाव-हतया ऋचा स्तुतिं निंदित्वा, साम्ना स्तुतिर्विधीयत इति वा, अवश्या-नामसुराणामपि वशीकरणहेतुत्वेन स्तुतामृचा स्तुतिं विधाय, अग्रे तच्छेष-तया साम्ना स्तुतिरवश्यवशीकरणासमर्थत्वेन निंद्यत इति वा एकवाक्यत्व-संभवात्। न चात्र किंचिदन्यतरस्मिन् पक्षे विनिगमकमुपक्रमे दृश्यते। न च तत्र विनिगमकादर्शनमात्रेण वाक्यभेदमभ्युपगम्य उभयत्र विधिकल्पनम् युक्तम्। 'असुरा अन्ववायन्नि'त्यस्य भयावहत्वेन निंदापरत्वे ऋचा स्तुतौ-विध्ययोगात्। अवश्यवशीकरणसमर्थत्वेन स्तुतिपरत्वेन तदसमर्थत्वेन निंन्द्यमानायां साम्ना स्तुतौविध्ययोगात्। न चाऽन्ववायन्नित्यस्यावश्य-वशीकरणासामर्थ्येन स्तुतिपरत्वं नान्ववायन्नित्यस्य भयावहानागमन-हेतुत्वेन स्तुतिपरत्वमिति द्विरूपार्थकल्पनमुचितम्, प्रथमवाक्ये यदभि-प्रायेण 'असुरा अन्ववायन्नि'त्युक्तम्, तन्निषेध एवासुरा नान्ववायन्नित्यस्य स्वारस्यात्। ततश्च वाक्यभेदस्य ऋचा साम्ना च स्तुत्योर्विकल्पस्योभयो-रन्ववायन्नित्येतयोभिन्नार्थत्वस्य च परिहाराय किमन्यतरत्र विधौ विनि-

---

१—भक्ताधिकरणविषयविवेचनावसरे निष्कर्षितं मखिवर्यैर्विधौ सन्दिग्ध-मर्थवादेनावधार्यते। इति, नतूपक्रमे सन्दिग्धमुपसंहारेणावधार्यत इत्यत्रेति बोध्यम्।

गमकमस्तीति स्वतः एवोपक्रमस्य विनिगमकापेक्षया 'साम्ना स्तुवीते'त्त-प्रत्यक्षविधेस्तद्विनिगमकत्वेनाश्रयणम्, नत्वौपसंहारित्वे नप्राबल्यात्। ततश्च तदनुसारेण 'असुरा अन्ववायन्नि'त्यस्य निंदापरत्वनिर्णयः। अतएव स्तुतौ संदिग्धं विधिनावधार्येत इत्यस्येदमुदाहारणमिति प्रा'ग्दर्शितम्।

ननूपक्रमप्राबल्ये 'यद्दचा स्तुवते' इति परमोपक्रमश्रवणमात्रेण ऋचा स्तुतौ विधिरित्यवधारिते तदनुसारेणैव तदनंतरश्रुतं सर्वं नेतव्यम् स्यादिति चेत्। स्यादेवं यदि तत्र प्रत्यक्षो विधिः श्रूयेत, कल्प्यस्तु तत्र विधिः, कल्पनं च तद्विरुद्धप्रत्यक्षश्रुतो वाक्यशेषो निरुणद्धीत्यावेदित-मक्ताधिकरणार्थनिर्णय इत्येषा दिक्। एवमन्यत्रापि संभाविताः क्षुद्रोपद्रवाः अनयैव दिशा निरसनीयाः,

यत्तूपक्रमप्राबल्यवादे किमुपक्रमे प्रतीतमात्रस्य ग्राह्यत्वमित्यादि प्रलपितम्, तदुपसंहारप्राबल्यवादे किमुपसंहारे प्रतीतमात्रस्य ग्राह्यत्वम्, किंवा उपक्रमपरामर्शेन व्यवस्थितस्य। आद्ये उच्चैःष्ट्वादीनामृगादिधर्मत्वा-पत्तिः, द्वितीये उपक्रमस्यैव प्राबल्यंसिद्धेदिति प्रतिवचन मेवरिक्तीकरोति। वस्तुस्थितिस्तु उपक्रमस्वारस्येन प्रतीतं ग्राह्यम्, नोपसंहारपरामर्शेन व्यवस्थितम्। श्येनादिवाक्ये विशिष्टविधिगौरवादिभिया उपक्रमस्य स्वारस्यनैव पदग्रादेरग्रहणम्, नोपसंहारानुसारेणेत्यावेदितमेव। तस्माद्वार्त्ति-कोक्तरीत्या निरवद्यमुपक्रमप्राबल्यम्।

## उत्तरमीमांसायामपि उपक्रमप्राबल्यस्यादरः।

एवम् पूर्वमीमांसायां व्यवस्थितमुपक्रमप्राबल्यमुररीकृत्यैवोत्तरमीमां-सायामपि भगवत्पादैः तत्र तत्रार्थनिर्णयाः कृता दृश्यन्ते।

## उत्तरमीमांसायामप्युपसंहारप्राबल्यनिरासः।

यत्त्वर्वाचीनैः पूर्वमीमांसायामिवोत्तरमीमांसायमप्युपसंहारप्राबल्योप-जीवनमस्ति। तत्र 'तदन्तरप्रतिपत्तावि'त्यधिकरणे 'तस्मिन्ने तस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इति पंचाग्निविद्यागतवाक्ये श्रद्धाशब्दस्य 'इति

तु पंचम्यामाहुतौ आपः पुरुषवचसो भवंती 'त्युपसंहारानुसारेणाब्लक्षणायाः[1] 'प्रथमे अश्रवणात् इति चेत् एता एवह्युपपत्तेरि '३-१-५ तिसूत्रेणोक्तत्वादित्युदाहरद्भिः तत्रापि स्वाव्युत्पत्तिप्रकटनम् कृतम्। तस्य यथाश्रुतं भगवत्पादीयतत्सूत्रगतोपपत्तिपदव्याख्यानमेव निराकरणम। भगवत्पादैर्हि वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवंतीति परमोक्रम प्रश्नोपपत्तिः। 'वेत्थ यथा पचम्यामाहुतावापः पुरुषवचसो भवंति, इति तु पंचम्यामाहुतावापः पुरुषवचसो भवंतीति प्रश्न प्रतिवचनैकरूप्योपपत्तिः, श्रद्धाकार्यसोमवृष्टयन्नरेतोरूपानन्तराहुतिद्रव्याणाम् जलप्रचुरोपपत्तेःप्रत्ययविशेषरूपायाः श्रद्धायाः स्वोपादानादवच्छिद्याऽन्यत्र प्रक्षेपस्यासंभवेनाहुतिद्रव्यत्ववर्णानायोगात्। श्रद्धाशब्दस्य स्वत एव प्रक्षेपयोग्यद्रव्यपरत्वाकांक्षायां वाक्यशेषसमर्पितास्वप्सु तात्पर्योपपत्तिः। 'श्रद्धा वा आपः' तै. ब्रा. ३-२ इत्यादौ श्रद्धाशब्दस्याप्यप्सु दृष्टप्रयोगत्वेन तत्र तल्लक्षणोपपत्तिश्च। 'श्रद्धां जुह्वती'त्यत्र श्रद्धाशब्दस्याप्युपलक्षणाभ्युपगमे मूलत्वेन व्याख्याता नोपसंहारमात्रोपपत्तिः। तस्मात्तत्रायमस्थाने भ्रमः। इहत्वेवं संभवति भ्रमः।

'अन्यथात्वं शब्दादिति चेन्नाविशेषादि'त्यधिकरणे हन्तासुरान्यज्ञ उद्गीथेनात्ययाभे'त्युद्गीथोपक्रमेणोद्गीथस्योपास्यत्वे प्रतीयमानेप्युपसंहारे 'तेभ्य एष प्राण उदगायदि'त्यादावुद्गातृपरामर्शात्तदनुरोधेनोद्गातुरेव प्राणदृष्टेपोपास्यत्वम् नोद्गीथस्येति निर्णयः कृतः।

'न संख्योपसंग्रहादपि नानाभावादतिरेकाच्चे' वे०द०१-४-११ त्यधिकरणे 'यस्मिन्यंच पंचजना आकाशश्च प्रतिष्ठितः'।
तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोमृतमि'॥ 'बृ० उ० ४-४-१७ ति।

वाजसनेयकाम्नातमंत्रगतस्य मनुष्येषु रूढस्य जनशब्दस्य 'प्राणस्य प्राणमुत

---

1---उपलक्षणाया इति मु. पु. पा.

अन्यथात्वञ्चे'त्यधिकरणोक्तंपसंहारविजयकर्तुगुरूणां मतं निरसितुमुपस्थापयति---यरववार्चीमैरित्यादिननतान्युपसंहारप्राबल्ये संगच्छन्ते इति।

चक्षुषः चक्षुः, श्रोत्रस्य श्रोत्रम्, अन्नस्यान्नम्, मनसो ये मनो विदुरि' ति वाक्यशेषे संकीर्तितेषु प्राणादिषु प्रवृत्तिः'प्राणादयो वाक्यशेषादि'४-४-१२ति सूत्रेणैवोक्ता ।

## उपक्रमप्राबल्ये पारिप्लवाधिकरणस्योपन्यासः

पारिप्लवाधिकरणे च 'सर्वाण्युपाख्यानानि पारिप्लेवं शंसतो'ति विध्यनुसारेण 'प्रतर्दनो ह वै दैवोदसिरिंद्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च, मटचीहतेषु कुरुष्वाटिक्या सह जायया उषस्ति, चाक्रायणः इभ्यग्रामे प्रद्राणक उवासे छा० ३-१-१०-१ त्यादिब्रह्मविद्यांगभूतोपाख्यानानामपि पारिप्लवार्थत्वे प्राप्ते 'मनुर्वैवस्वतो राजे' त्यादिवाक्याशेषसंकीर्तिताख्यानविशेषेषु सर्वशब्दस्य संकोचमभ्युपगम्य तेषामेव पारिप्लवार्थत्वम् 'पारिल्पवार्था इति चेन्न विशेषितत्वादि' ३-४-२३ ति सूत्रेण निर्णीतम् ।

## दहराधिकरणमुपक्रमप्राबल्यस्वीकार एव घटते

दहराधिकरणे च 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुंडरीकम् वेश्म, दहरोस्मिन्नंतराकाशः, तस्मिन्यदंतः स्तदन्वेष्टव्यम्, तद्वाव विजिज्ञासितव्यम्, तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुंडरीकम् वेश्म दहरोस्मिन्नंतराकाशः, किं तत्र विद्यते, यदन्वेष्टव्यम्, यद्वावविजिज्ञासितव्यमिति, स ब्रूयाद्यावान्वा अयमाकाशः, तावानेषो 'तर्हृदये आकाशः, उभे अस्मिन् द्यावापृथिवी अंतरेव समाहिते' इत्यादिवाक्ये तदस्मिन्यदंतः तदन्वेष्टव्यमि २-१-२-३ति उपक्रमे तस्मिन्नित्यस्याव्यवहिताकाशपरत्वस्वारस्येन आकाशान्तर्वर्तिनस्ततोऽन्यस्यान्वेष्टव्यत्वप्रतीतावपि 'यावान्वा अयमाकाशः' इत्यादिवाक्यशेषे दहराकाशस्य बाह्याकाशसमाना परिमाणत्वादिमहिमवर्णनदर्शनात्तस्यैवान्वेष्टव्यत्वम्, परब्रह्मरूपता चेत्युभयं 'दहर उत्तरेभ्य' इति सूत्रेण निर्णीतम् । एवमेतेष्वधिकरणेषु भगवत्पादीरीत्योपसंहारानुसरणं प्रतीयते—इति ।

## पूर्वपक्षिणोक्तस्य प्रथमस्य समाधानम्

तत्रैवं प्रतिबोधनीयम् 'अन्यथात्वं शब्दादि ति' चेत्यधिकरणोदाहरणे

---

१—तल्लक्षणेति मु० पु० पा०

२—चान्द्रिोक्तमर्थंनिराकर्तुं प्रतिजानीते 'तत्रै' प्रतिबोधनीयमि'त्यादिना ।

उपक्रमोपसंहारयोर्विरोध एव नास्ति। तत्र पक्रमप्रतीतोद्गीथापरित्यागे-नैवोद्गीथगानकर्तृरूपे उद्गातरि प्राणदृष्टिविधानाभ्युपगमात् उपक्रमस्य लक्षणादिकल्पनं विनोपसंहारसमर्पितविशेषावापमात्रं हि न तेन विरुद्धयते। यथा गुरुमते आग्नेयादियागानामुत्पत्तिवाक्यावगतेन यागत्वेन 'चतुरवत्तं जुहोती'ति वाक्यावगतस्तेषु प्रक्षेपाधिकत्वरूपहोमत्वावापः न विरुद्ध्यते।

## द्वितीयस्य समाधानम्

'यस्मिन् पंच पञ्चजनाः' इति मन्त्रो पंच मनुष्याः परब्रह्मणि संतीत्येतावता परब्रह्मणः कस्यचिदुत्कर्षस्याप्रतीतेः पंचजनशब्दस्यान्यत्रैव क्वचिदर्थे तात्पर्यमिति सामान्यतोऽवगतौ तद्विशेषाकांक्षयां वाक्यशेषसमर्पितप्राणादिपरिग्रहः, न तु तदनुसारेणोपक्रमस्यान्यथानयनम्।

## तृतीयस्य समाधानम्

'सर्वाण्युपाख्यानानि पारिप्लवे शंसंती'त्यत्रानंतशाखागतसर्वाख्यानशंसनस्याशक्यतयोपक्रमस्यैव केनचिदवच्छेदेन आख्यानसामस्त्ये पर्यवसानाकांक्षया वाक्यशेषसंकीर्तिताख्यानसामस्त्ये पर्यवसानम्, नोपसंहारानुसारेण।

## तुरीयस्य समाधानम्

दहराधिकरणे दहराकाशस्य परब्रह्मता वाक्यशेषगतश्रुतिलिंगभूयस्त्वेन निर्णीता 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वमि' मी. द. १२-२-२२ ति न्यायात्। अतएव सूत्रे उत्तरेभ्य इति बहुवचनेन लिंगभूयस्त्वं दर्शितम्। वाक्यशेषे च 'यावान्वा अयमाकाशः' इत्यादिना प्रतिपादितं प्रसिद्धाकाशसादृश्यम् 'उभे अस्मिन् द्यावापृथिवी' इत्यारभ्य 'यच्चास्येहास्ति, यच्च नास्ति, सर्वं तदस्मिन्समाहितमि' छा. ३-८-१-३ त्यन्तेन प्रतिपादितद्यावापृथिव्यग्निवायुसूर्यचंद्रविद्युन्नक्षत्रादिसकलजगदाधारत्वम्, 'एष आत्माऽपहतपाप्मा विजो रोविमृत्युरि'त्यादिना प्रतिपादितमपहतपाप्मत्वादिगुणाष्टकमित्यादीनां लिंगानां भूयस्त्वं स्पष्टमेव। 'एष आत्मा अथ य इहात्मानमित्याद्यात्मश्रुतयश्च संति, गुणसूत्रोक्ताश्च गत्यादयः।

तथा च बहूनामेषामनुग्रहाय 'त्यजेदेकं कुलस्यार्थे' इति न्यायेन आकाशश्रुतिरेकाऽन्यथा नीयते, बहुबाधस्यान्याय्यत्वात्। न 'चात्मार्थे पृथिवीम् त्यजेदि'ति ततोपि बलवता न्यायेन प्रधानविरोधिनां बहूनामपि गुणानाम् बाधनं न्याय्यम्। उपक्रमोपसंहारैकरूप्यावगतप्रधानवेदांतप्रतिपाद्याद्वैतविरोधिनां बहूनामपि तत्तत्पदसमर्पितप्रवृत्तिनिमित्तभूतधर्माणां बाधाभ्युगमात्। सूक्ष्मखादिरादिप्रधानयूपद्रव्यविरोधिनां तक्षणादीनां बहूनामपि बाधस्य पूर्वतंत्रे 'द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वादि ६-३-१९ त्यधिकरणे प्रतिपादनाच्च।

## भूयोऽनुग्रहन्यायस्य विषयविशेषकथनम्

विप्रतिषिद्धधर्माणां समवाये यत्र तुल्यप्रधानानामेव प्रथम-चरमभावमात्रं विशेषः, तत्रैव। अत एव तत्र पंचदशरात्रे अग्निष्टुत्प्रथममहः, तद्धर्मतयोपसत्स्वाग्न्येयी सुब्रह्मणया प्राप्ता, उत्तराणि 'ज्योतिर्गौरायुरि'त्यादीनि चतुर्दशाहानि, तद्धर्मतयैंद्री प्राप्ता, एवमहर्धर्मयोर्विरोधे सत्यह्नां समप्रधानत्वेन गुणप्रधानभावादिविशेषानवगमेन कस्य धर्मः ग्राह्य इत्याकांक्षायां मुख्यत्वादग्निष्टुतस्तद्धर्मग्रहे प्राप्ते पाश्चात्यत्वेपि ज्योतिरादीनां भूयस्त्वात् भूयोनुग्रहस्य न्याय्यतया ज्योतिरादिधर्मः ग्राह्य इति सिद्धांतितम्।

## द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वादिति न्यायस्य विषयपरिशोधनम्

यत्र तु भूयसामेकस्य च गुणप्रधानभावादिविशेषो न, तत्र भूयोनुग्रहादरः। यथोदाहृतद्रव्यसंस्कारविरोधाधिकरणे। तत्र हि यदा तनुत्वात् तक्षणादिसंस्कारायोग्यः पशुनियोजनमात्रयोग्यः खदिरो लब्धः, तत्प्रतिनिधिः कदरस्तु महान् तक्षणादीनामपि योग्यो लब्धः, तत्र यूपार्थम् कस्योपादानं कर्तव्यमिति संशय्य, कदरोपादाने 'खादिरो यूपो भवती'त्यस्य किंचिद्वैकल्येपि तक्षणदीनां बहूनामनुग्रहलाभात् कदरोपादानं युक्तमिति प्राप्ते, बहूनामपि तक्षणादिसंस्काराणां द्रव्यार्थत्वाद्गुणानुरोधेन प्रधानपरित्यागो न युक्त इति खदिरोपादानं कर्तव्यमिति सिद्धांतितम्।

## अनुनिर्वाप्यपुरोडाशेषु पशुपुरोडाशतन्त्र-प्रसंगाधिकरणस्य विषयपरिशोधनम् ।

अनुनिर्वाप्याधिकरणे चाग्निचयने अग्निषोमीयस्य पशुपुरोडाशम 'ष्टौ-देवसुवां हवींष्यनुनिर्वपे'दित्यत्र किमग्नीषोमीयपशुधर्मा एकादशप्रयाजत्वादयो ग्राह्याः, उत अनुनिर्वाप्यधर्माः पंचप्रयाजत्वादय इति संशय्य, भूयोनुग्रहन्यायेनानुर्वाप्यधर्मग्रहे प्राप्ते यत्र सर्वेषां तंत्रतया न गृह्यते विशेषः, तत्र मुख्यानुग्रहन्यायापवादो भूयोऽनुग्रहः। यत्र त्वेकस्तंत्री, इतरे प्रसंगिन इति गृह्यते विशेषः, तत्रैकस्यापि तंत्रिण एव धर्मा ग्राह्याः, बहूनामपि प्रसंगिनां तन्त्रोपजीवित्वेन स्वधर्माप्रयोजकत्वादिति निर्णीतमिति चेत्। नैवम्। वेदा 'तेऽद्वैतवदिहोपासनापरे आकाशशब्दितस्य प्रतिपाद्यत्वरूपप्राधान्यासिद्धेः,' विधीयमानक्रिया[1] कर्मत्वलक्षणस्य स्वदिरादिवत् प्राधान्यस्य-ब्रह्मलिंगभूतेषु गुणेष्वप्यविशिष्टत्वात्। 'अथयइहात्मानमनुविद्य व्रजंत्ये'तांश्च सत्यान्कामान्, तेषां सर्वेषु लोकेषु कामचारो भवती'ति तेषामप्युपास्यत्व-निर्देशादग्नीषोमीयवत् तंत्रित्वलक्षणविशेषस्य चेह शंकानास्पदत्वात्। [2]तस्माद्दहराकाशो ब्रह्मेति बह्वनुग्रहन्यायेन निर्णयः, नोपसंहारप्राबल्येन।

नन्वस्त्वेवमेतत्। तथापि 'तस्मिन् यदंतरि'ति दहराकाशस्योपासना विधीयत इति कुतोवसीयते ? 'यावान्वा अयमाकाशः' इत्यादिना तन्महि-

---

१—कर्तृत्वेति ख. पु. पा.।

२—अत्रेदमवधेयम्—वृत्यन्तरकारैः 'मुख्यं वा पूर्वचोदनाल्लोक वदि' मी. द. १२-२-२५ ति सूत्रे वाशब्दप्रयोगात् पूर्वसूत्रोक्तपूर्वपक्षस्य निरासार्थत्वम् प्रतीयते। अत इदं सिद्धान्तप्रतिपादकमिति मन्वानैरेकाधिकरणपरतया व्याख्यातम्। इदमनुपपन्नमिति मत्वा भाष्यकारोऽधिकरणद्वयपरतया व्याचख्यौ। तस्यायमाशयः। तथाहि—'अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमस्स्यादि मी. द. १२-३-३ त्यधिकरणे पुरोडाशोऽपि स्विष्टकृदादिविषये तन्त्री, अनुनिर्वाप्याः प्रसंगिन इति सिद्धान्तः कृतः। इदञ्च तन्त्रि—प्रसंगविषयेऽपवादकरणमनुपपन्नं स्यात्, पूर्वत्र क्वचिदपि भूयस्त्वेन प्राबल्यमित्यस्याप्रतिपादनात्। अतोऽल्पभूयोविरोधे भूयस्त्वम्, तुल्यसंख्ययोर्विरोधे तु मुख्यत्वं नियामकमिति न्यायद्वयप्रतिपादकतया भिन्नमेवाधिकरणद्वयम्। अतएवैकाहिके विश्वजिति वत्सत्वक्, इतरेष्वहस्सु वासः प्राप्तम्, तत्र तन्त्रिभूयस्त्वात् अहतमेव स्यादिति सूत्रकारेण भूयोऽनुग्रहस्य व्यवहि-

मवर्णनादिति चेत् । न । 'पद्मकोशप्रतीकाशमि'त्यादौ दहरपुंडरीकवर्णनवत्त-दन्तर्वर्तिवस्तुप्रतिपत्त्यर्थत्वेनापि तत्संभवात्, दहराकाशांतरवर्ति ततोऽन्य-दुपास्यं न संभवतीति चेत् । न । तदनन्तरमे'वोभे अस्मिन् द्यावापृथिवी' इत्यादिना तदंतर्वर्तिवस्तुप्रतिपादनेन तस्योपास्यत्वसंभवात् । द्यावापृथिव्या-देरुपास्यत्वे 'अथ य इहात्मानमि'त्यात्मोपास्तेः फलत्वापसंहारो विरुध्यते इति चेत् । तर्हि तन्मात्रानुसारेण 'तस्मिन् यदंतरि'त्यादेर्दहराकाशरूप परमात्मोपासनाविधिपरत्वमिति सिद्धमुपसंहारप्राबल्यम् । न च तस्मिन्यदं-तरित्यादेः पुंडरीकांतर्वर्तिदहराकाशोपासनाविधिपरत्वम्, 'दहराकांशांत-र्वर्तिवस्त्वंतरोपासनसिद्धिपरत्वं वेति संदिग्धस्योपसंहारेण निर्णयमात्रम् क्रियते, नबाध इति वाच्यम्[1] । 'दहराकाशांतर्वतिवस्त्वंतरोपासनाविधि-परत्वस्यैव तत्स्वारस्येनावधार्यमाणतया संदेहाभावात् ।

तस्य पुंडरीकातर्वर्तिदहराकाशोपासनाविधिपरत्वे हि तस्मिन्नित्यस्य व्यवहितपुंडरीकपरामर्शित्वं स्यात् । तच्च व्यवहितदहराकाशपरामर्शित्व-संभवे न युक्तम् । दहराकाशस्य पुंडरीकांतरवर्तित्वस्य 'दहरोस्मिन्नंतराकाशः' इत्यनेनैव प्राप्ततया 'तस्मिन् यदंतरि'त्यस्य च वैयर्थ्यं स्यात् । तदपि तद-प्राप्तदहराकाशांतर्वर्तित्वपरत्वेन सार्थकत्वसंभवे न युक्तम् । दहराकाशः पुंडरीकांतवर्ती इत्यस्य निर्ज्ञाततया 'तस्मिन्यदंत'रिति उक्त्यनंतरं 'किंतदत्र विद्यत' इति प्रश्नोप्यसंमजसः स्यात् । तदसामंजस्यमपि तस्मिन्यदंत-रित्येवं संमुग्धाकारेण दहराकाशां'तवर्तिनः कस्यचिदुपासनाविधिपरत्वे तस्य विशिष्यावगत्यर्थं 'किंतदत्र विद्यत' इति प्रश्न इति सामंजस्यसंभवे न युक्तम् । यत्पदस्य 'दहरोस्मिन्नंतराकाश' इति पूर्वनिर्दिष्टनिर्ज्ञातपुल्लिंगा काशपरत्वे च नपुंसकलिंगमत्यंतासंगतं स्यादिइति, तस्य प्रश्नानंतरम् निर्देक्ष्यमाणानिर्ज्ञातलिंगवस्त्वंतरपरत्वेन कथंचित्संगतिसंभवे तदसांगत्य-मपि न युक्तम् । एवमपि यत्तस्मिन्यदंतरित्यस्य दहराकाशोपासनाविधि-परत्वमवगम्यते, न त दुपास्तिफलोपसंहारप्राबल्येनेत्येव पर्यवस्यति-इति ।

---

यमाणत्वात् । अतो विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम्, मुख्यम् वा पूर्वचोदनाल्लोकवत् 'इत्यनयोरधिकरणयोर्भेदस्य स्फुटं प्रतीयमानत्वादिति मनसि निधायाह—यत्र सर्वेषां तन्त्रतया न गृह्यते विशेषः—इति ।

---

१—दहरेत्यादि–न वाच्यमित्यन्तं. मु. पु. नास्ति ।

## अत्र विषये रामानुजीयव्याख्यानस्यानुवादेन परस्य शंका

एतेन—तस्मिन्यदंतरित्यत्र यद्रामानुजीयं कल्पनम्—तस्मिन्नित्यव्यवहितः दहराकाशः परामृश्यते, यदंतरिति च अस्मिन्कामाः समाहिता इति प्रश्नातरे निर्देक्ष्यमाणं कमनीयतया कामशब्दवाच्यं तदवगतमपहतपाप्मत्वादिगुणजातमुच्यते, अतो न कश्चित्पूर्वोक्तदोषः। तदन्वेष्टव्यमिति तु तन्मात्रस्योपासना न विधीयते, अथ य इहात्मानमिति वाक्यशेषे आत्मनः, तद्गुणानाञ्च उपासनायाः फलवत्त्वोपसंहारात्। किन्तु तस्मिन्निति निर्दिष्टो दहराकाशः, यदिति निर्दिष्टं तदंतर्वर्ति गुणजातं चेत्युभयोरुपासनं विधीयते। न च नपुंसकलिंगैकवचनांतेनोभयपरामर्शानुपपत्तिः। 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामि' पा०८सू०अ०१पा०२सू०६९ति व्याकरणसूत्रेण नपुंसकानपुंसकयोः नपुंसकशेषस्य एकवद्भावस्यानुशासनादुभयपरामर्शोपपत्तिरिति। तत्रापि नपुंसकैकवचनांतस्य यत्पदस्य कामशब्दोक्तानेकगुणपरामर्शित्वात् तदस्य, तस्मिन् यदिति विभिन्नविभक्तिनिर्दिष्टोभयपरामर्शित्वतदेकशेष इति त्रयमिदं क्लिष्टम्। स्वतोऽप्रतीयमान'मथ य इहात्मानमि'त्याद्युपसंहारानुसारेणैव कल्पनीयमित्युपसंहारप्राबल्यमवर्जनीयमिति चेत्।

## तस्य निरासः

[3]उच्यते। 'यावान्वा अयमाकाशः, तवानेषोन्तर्हृदय आकाशः' इत्येतावता दहराकाशमहिमवर्णनस्य द्यावापृथिव्यादितदंगतवस्तुप्रतिपत्त्यर्थत्वसंभवेपि तेषां तदन्तर्गतत्वप्रतिपादनानंतरमारब्धस्य 'एष आत्मा अपहतपाप्मा'[2] अस्मिन्कामाः समाहिताः, अथ य इहात्मानम्, इमाः सर्वाः प्रजाः अहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्द'त्यनृतेन हि प्रत्यूढाः, अथ य आत्मा सेतुर्विधृतिरेषां लोकानामसंभेदाये'त्यादिदहराकाशमहिमप्रपंचनस्य तदंतर्गतवस्तुप्रतिपत्त्यर्थत्वासंभवादुपासनार्थत्वावश्यंभावेन तेषामनन्यथासिद्धानाम्

---

१—उक्ताधिकरणविषयविवेचनावसरे निष्कर्षित मखिवर्यैः 'विधौ सन्दिग्धमर्थवादेनावधार्यंत इति। न तू पक्रमे सन्दिग्धमुपसंहारेणावधारयांत' इत्यत्रेति बोध्यम्,।

२—'तस्मिन्यदतः' इत्यादिदहरविद्याप्रकरणवाक्यसन्दर्भस्य दहरोपासनाफलोपसंहारप्राबल्योपजीवनेनेति, एतेन—तर्कताण्डवादिकर्तुर्मतनिरासार्थमुक्तेन युक्तिनिचयेनेत्यर्थः। ३—श्रीरामानुजीयं व्याख्यानं क्रमेण दूषयति 'उच्यते' इति।

भूयसामनुग्रहानुरोधेन तस्मिन्यदंतरित्यादेर्दहराकाशस्यान्वेष्टव्यतापरत्वमवसीयते, न तदुपास्तिफलोपसंहारमात्रानुरोधेन। न चैष आत्मेत्यादौ एतदादिशब्दानामव्यवहितद्यावापृथिव्यादिपरत्वं शंकनीयम्। पुल्लिंगैकवचनान्तानां तेषां व्यवहितेप्याकाश एव स्वारस्यात् 'उभे अस्मिन् द्यावापृथिवी' इत्यादौ आकाशे अवगतस्य समाधाना'धारत्वस्यास्मिन्कामाः समहिताः' इत्यत्र प्रत्यभिज्ञानाच्च। तथा च भूयोनुग्रहानुरोधेन तस्मिन्यदंतरित्यत्र तस्मिन्नित्यस्य व्यहितपुंडरीकपरामर्शित्वकल्पनं न दोषः, सर्वनाम्नामव्यहितपरामर्शासंभवे व्यवहितपरामर्शित्वस्य 'तस्य द्वादशशतं दक्षिणे' ता० ब्रा० १६-१-११ त्यादौ दृष्टत्वात्। यत्पदं वक्ष्यमाणद्यावापृथिव्यादिसकलविशेषणविशिष्टदहराकाशपरम्, अन्यथा विशेषणानां विध्यसंस्पर्शे[2] उपास्यत्वासिद्धेरिति नानुवादवैयर्थ्यम्। अतएव 'किं तदत्र विद्यते' इत्यप्युपपद्यते। नह्ययं प्रश्नः, किं त्वाक्षेपोयम्। अतिस्वल्पे आकाशे विशेषणतया किमन्वेष्टव्यम्, विज्ञातव्यं वास्तीति। अतएव 'यदि तस्मिन्ब्रह्मपुरे' इत्यादेः पुनरनुसंकीर्तनं शरीरांतर्गतं पुंडरीकमेव तावदल्पम्, अल्पतरञ्च तदंतर्गतमाकाशम, किं तत्र वर्तते इत्याक्षेपोपयोग्यर्थद्योतनाय। प्रश्नपरत्वे 'किं तत्र विद्यते, एतावदेव वक्तव्यं स्यात्। एवमाक्षिप्ते सत्युत्तरवाक्येन भूताकाशसादृश्यप्रतिपादनं तदंतःसर्वसमाधानप्रतिपादनाय। पुंडरीकवेष्टनकृतालपत्वव्यावृत्तिपरमिति नासमंजसं किंचित्। यच्च नपुंसकलिंगासंगतिरित्युक्तम्, तदपि न। लुङः विषयेऽनद्यतनभूतेपि भूतत्वसामान्यानुवृत्तेस्तद्विवक्षया लुङ्प्रयोगस्येव सर्वविकारानुवृत्तसत्वरजस्तमोगुणानुगतं गुणत्वसामान्यं स्थितिशब्दितं नपुंसकलिंगमिति शाब्दिकमर्यादया नपुंसकलिंगस्य स्त्रीपुल्लिंगरूपयोपि विकारयोरनुगमात्तद्विवक्षया नपुंसकलिंगनिर्देशस्योपपत्तेः। 'मुखनासिकावचनोनुनासिकः, द्विगुरेकवचनमि'त्यादौ निर्ज्ञातान्यलिंगपदां'तरविशेषणानामपि नपुंसकलिंगत्वदर्शनाच्च।

## मेष्यां पुंल्लिंगस्यैवात्र पिलिंगस्याप्रवृत्तिरिति शंका

ननु 'लिंगविशेषनिर्देशात्समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वादि'- ९-१-४५ति पूर्वतंत्राधिकरणे संस्थापशूनां च सामानविध्यपक्षे अतिरात्रगतायां सारस्वत्यां मेष्यामध्रिगुप्रैषाम्नातस्य 'प्रास्मा अग्निं भरत, स्तृणीत बर्हिरि'त्यस्मैशब्दस्य क्रतुपपशुरामर्शिनो विलिंगत्वादप्रवृत्तिरुक्ता।

---

१—सर्वाधारत्वस्येति ख. पु. पा.। २—विधिसंस्पर्शे इति ख० पु० पा०।

## वैषम्यप्रतिपादनेन शंकानिरासः ।

सत्यम् । तत्र पुल्लिंगस्य स्त्रियामसाधुत्वादप्रवृत्तिरुक्ता, 'अन्वेनं माता मन्यतामि'त्यन्वादेशे पुल्लिगनिर्देशेनास्मा इत्यस्य पुंल्लिगत्वनिश्चयात् । इह तु नपुंसकलिंगस्य अन्यत्राप्रवृत्तिरुपपादितैव ।

किंच तत्र पुंस्श्शूनामपि सन्निधानात्तेषु चरितार्थस्यास्मैपदस्य सारस्वत्यामप्रवृत्तिर्युक्ता, इहतु यत्पदस्य क्व चरितार्थतास्तु । निर्देक्ष्यमाणेषु द्यावापृथिव्यादिष्वपि लिंगवैगुण्यमविशिष्टम् । अधिकंतु वचनवैगुण्यम् । यद्यपि तदादिनिर्देक्ष्यमाणविशेषानवगमात् तद्वैगुण्यं न प्रतिसन्धीयते । तथापि द्यावापृथिव्यादिनिर्देशानन्तरं तद्वैगुण्यप्रतिसंधानमवर्जनीयमिति, तदा तत्र लिंग-वचनयोरुभयोरपि कथंचिदुपपादनमन्वेषणीयम् । तदिहैव

---

लिंगमात्रस्योपपादनमन्विष्यताम् ।

---

## दहरवाक्यस्यान्यथा तात्पर्यवर्णनम् ।

यद्वा—दहराकाशे परमात्मनि यदन्तर्वर्तते, तदन्वेष्टव्यमि'ति वक्ष्यमाणानां द्यावापृथिव्यादीनां सामान्येनोपासनाविधिः । एवञ्च तस्मिन्नित्यस्य न व्यवहितपरामर्शित्वम्, न च नपुंसकलिंगानुपपत्तिः । नापि तास्मिन्यदंतरिति पुनरनुकीर्तनं व्यर्थमिति शंकावकाशः । 'किं तदत्र विद्यत' इति पूर्ववदेव तदंतवर्त्यसंभवेनाक्षेपे 'यावान्वा अयमि'त्यादिना दहराकाशवैभववर्णनापूर्वकं तत्र द्यावापृथिव्यादीनाम्, पित्रादिब्रह्मलोकान्तानां च सत्यकामशब्दितानां तदंतर्वर्तितयोपास्यानामुपन्यासः । तस्य दहराकाशस्योपासनाविधिस्तु तदंतर्गतोपासनाविधिनैवार्थसिद्धः, पृष्ठसामगतसर्वताविधानेनेव पृष्ठसामविधिः । नहि दहराकाशमनुपासीनेन तदंतर्वर्तितया द्यावापृथिव्यादिकमुपासितुं शक्यम् । एवमर्थसिद्धं दहराकाशस्योपासनं श्रुतम्, तत्समाहितोपासनं च 'अथ य इहात्मानमि'त्यादिफलवाक्ये अनुकीर्तितमिति न कस्याप्यसांगत्यम् ।

अथवा—तस्मिन्यदंतस्तत्साधारणमन्वेष्टव्यमित्यध्याहारोऽस्तु, अग्रिमानुरोधात् । नह्येतावतोपसंहारेणात्रोपक्रमस्य प्रतीतार्थपरित्यागरूपमन्यथाकरणम्, तत्प्रतीतदहराकाशांतर्वर्त्युपास्यत्वापरित्यागेनैवोपसंहारसमर्पितदहरोपास्यत्वलक्षणाधिकावापमात्रकरणात् ।

केचित्तु फलवाक्ये दहराकाशस्य धर्मिणः, तद्धर्माणां च पृथगुपासनानुवादमनुरुंधानास्तस्मिन्यदंतरित्युपक्रमे यो दहराकाश इत्यध्याहृत्य,

यो दहराकाशः, यच्च तदंतर्वर्ति गुणजातम्, तदुभयमुपासनीयमिति वाक्यार्थम् वर्णयंति। तदर्थं च तत्पदे 'त्यदादीनि सर्वैर्नित्यम्, पा. १-२-७२ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामि' १-२-६९ ति व्याकरणसूत्रानुरोधेन नपुंसकैशेषैकवद्भावावङ्गीकृत्योभयपरामर्शित्वमुपपादयन्ति। सर्वेप्येते पक्षाः प्रपञ्चेन[१] न्यायरक्षामणावस्माभिरुपपादयिष्यन्ते। तस्मात्सिद्धमेतत् दहराधिकरणे नोपसंहारप्राबल्योपजीवनमस्ति, नवा सूत्रकारमतिप्राप्तम्। उत्तरेभ्यइति बहुवचनेन बह्वप्रनुग्रहन्यायस्यैव सूचनात्—इति।

## उपसंहारगतलिंगस्य प्राबल्यमाकाशाधिकरणावलम्बनेन शंका

'नन्वाकाशस्तल्लिंगादि'त्यधिकरणे[१] लिंगबलेनाकाशश्रुतेरन्यथानयनम् कृतमिति तावदविवादम्। तत्र स्वतः श्रुतेर्दुर्बलस्य लिंगस्य—

'दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा।
तदापि विपरीतत्वं शिष्टाकोपे यथोदितम्'॥ तं. वा. पृ. ८४१।

इति न्यायेन बलवदुपष्टम्भकृतमेव बलवत्त्वं वाच्यम्। तत्र न तावल्लिंगस्योपक्रमगतत्वं प्राबल्ये हेतुः, उपक्रमे ब्रह्मलिंगादर्शनात्। न चास्य लोकस्य का गतिः, अकाश इति होवाच, सर्वाणि ह्वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति, आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्, स एष परोवरीयानुद्गीथः, स एषोनंतः' छा. उप. १-९-१-२ इति विषयवाक्ये प्रश्नस्थं सर्वलोकगतित्वमुपक्रमगतं लिंगमिति शंकनीयम्। प्रश्नस्य 'अमुष्य लोकस्य का गतिरित्ययं लोक इति होवाचे'ति प्रस्तुतपृथिवीलोकगतिमात्रविषयत्वेन सर्वलोकगतिविषयत्वासिद्धेः। न चास्य प्रश्नस्य पृथ्वीमात्रगतिविषयत्वे 'अद्भ्यः पृथिवी' ति श्रुत्यंतरे तत्कारणत्वेन प्रसिद्धानामपामेव गतित्वेन वक्तव्यतया 'आकाश इति होवाचे'त्युत्तरासांगत्यमिति वाच्यम्। पृथिवीं प्रत्यपां साक्षात्कारणत्वेपि परंपरया आकाशस्यापि कारणकोटिनिविष्टत्वेन सामगतिपरंपरायामन्नकारणत्वेन पूर्वं गृहीताः अपो विहायाकाशो गतित्वेनोक्त इत्युपक्रमप्राबल्यवादे तदनुरोधेन तत्सां-

१—'ब्रह्मापि प्राधान्येनोपास्यमेव इत्यादिना' इति विशेषो विद्वद्भिरनुसन्धेयः' इत्यन्तेन न्या र. १८१ १८३ पृष्टेषु विस्तरोऽस्य द्रष्टव्यः।

१—चन्द्रिकोक्तमर्थं निरसितुमनुवदति—नन्विति।

गत्यवर्णनोपपत्तेः। पूर्वग्रंथे 'का साम्नो गतिरिति, स्वर इति होवाच, स्वरस्य का गतिरिति, प्राण इति होवाच, प्राणस्य का गतिरिति, अन्नमि'ति होवाच, अन्नस्य का गतिरिति, आप इति होवाच, अपां का गतिरिति, असौ लोक इति होवाच' छा. उ. १-८-४-५ इति शालावत्य-दाल्भ्यप्रश्न-प्रतिवचनपरंपरायामन्नगतित्वेनापां गृहीतत्वात्। नाप्युपसंहारगतत्वेपि भूयस्त्वं प्राबल्ये-हेतुः, उपासनापरेपि वाक्ये गतिविषयप्रश्नप्रतिवचनदर्शनादवान्तर-तात्पर्येणाकाशस्य सामगतिपरंपराविश्रांतिभूमित्वेन प्रतिपाद्यत्वाव-गत्या प्रधानविरोधिनां भूयसामप्यनादरणीयत्वात्। प्रधानश्रुत्यनुसारेण सर्वकारणत्व-सर्वलयस्थानत्व-सर्वतोज्यायस्त्व-परायणत्व-परोवरीयस्त्वानं-तत्वलिंगानामेव भूयसामप्यन्यथानयनस्योचितत्वात्। सूत्रे तल्लिंगादित्येक-वचनस्वारस्येन भूयस्त्वानपेक्षेण केनचिदेव लिंगेन श्रुतेरन्यथानयनम् विवक्षितमिति प्रतीतेश्च। न चोपसंहारगतत्वेपि सर्वकारणत्वादेरनन्यथा-सिद्धत्वं प्राबल्ये हेतुः। 'आकाशाद्वायुरि'त्यादिश्रुत्यन्तरसिद्धभूताकाश-गतवाय्वादीतरसर्वभूतकारणत्वाभिप्रायेण सर्वकारणत्वव्यपदेशोऽग्रिम-संदर्भोपि वाय्वादीतरभूतलयस्थानत्व-तदपेक्षज्यायस्त्वादिविषय इति, सर्वे-षामन्यथा नेतुं शक्यत्वात्। न च 'आकाशादेव समुत्पद्यंते' इति सावधारणम् कारणत्वं भूताकाशे न संभवति। तस्य तेजः प्रभृतिकारणत्वे वाय्वादिकारणां-तरसापेक्षत्वादिति शंकनीयम्। ब्रह्मणोपि 'वैषम्य-नैर्घृण्ये न सापेक्षत्वादि'ति न्यायेन जगत्सृष्टौ कालादृष्टादिसापेक्षत्वेन साम्यात्। कथंचिदवधारण-समर्थनस्य भूताकाशेपि संभवात्। तस्मात्प्रकारांतरासंभवादुपसंहार-गतत्वमेव लिंगस्य प्राबल्ये हेतुरिति सिद्धमुपसंहारप्राबल्यापेक्षणम्—इति।

## तस्य निरासः।

अत्रोच्यते। उपक्रमावगततया उपक्रमोपसंहारैकरूप्यावगततया अनन्य-थासिद्धतया च प्रबलेनानन्तत्वेन लिंगेन तत्राकाशश्रुतेरन्यथानयनम्। तथाहि—उपक्रमे पृथिवीलोकं सामगतिपरंपराविश्रांतिभूमित्वेन समर्थि-तवतः शालावत्यस्य पक्षे 'अन्तवद्वै किल ते शालावत्य सामे'ति जैवलिना अंतवत्त्वदोष उद्भावितः। तेनोपक्रम एवैतदवगतं स्वयं जैवलिरनन्तमन्यत्सा-मगतिपरंपरापर्यवसानभूमित्वेन विवक्षतीति, तदेकरूपश्चोपसंहारः। 'अस्य लोकस्य का गतिरि'ति शालावत्यपृष्टेन जैवलिना आकाशं गतित्वेनो-क्त्वा 'स एषोनन्त इति तत्रानंतत्वस्योपसंहृतत्वात्। अनन्यथासिद्धत्वं च अनंतत्वलिंगम्, अनंतवत्येव भूताकाशे वाय्वादिस्वकार्यापेक्षयाधिक-

कालावस्थायित्वाभिंप्रायेणानंतत्वव्यपदेश इति त्रिदशामरत्वन्यायेन तदनन्यथानयने उपक्रमसंकीर्तितांतत्त्वदोषपरिहारालाभात् । ततश्च यथा 'जामि वा एतद्यज्ञस्य क्रियते, यदन्वंचौ पुरोडाशौ, उपांशुयाजमंतरा यजति, विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्या जामित्वाये 'तै. सं. २. ति वाक्ये उपक्रमे पुरोडाशयागद्वयनैरन्तर्येण जामितादोषसंकीर्तनेन तत्परिहाराय तयोः मध्ये किंचिद्विधित्सितमित्यवगमात्, अजामित्वायेति तद्दोषपरिसंहारोपसंहारैक्यरूप्यात्, विष्ण्वादिवाक्येषु यागविधिस्वीकारे तद्दोषपरिहारालाभाच्च, तद्दोषपरिहारायांतरावाक्य एव कल्प्योपि यागविधिः स्वीकर्तव्य इति, जामितादोषपरिहारानुसारेण विष्ण्वादिवाक्येषु प्रत्यक्षाया अपि विधिश्रुतेरन्यथा[1]-नयनम्, [2]तथानन्तत्वानुसारेणाकाशश्रुतेरिति ।

## शंका ।

नन्वेवं स्वर्गलोकं सामगतिपरंपरापर्यवसानभूमित्वेन समर्थितवतः दाल्भ्यस्य पक्षे शालावत्यकृतेन 'अप्रतिष्ठितं वै किल दाल्भ्य सामेत्यप्रतिष्ठितत्वदोषोद्भावनेन शालावत्यः स्वयं प्रतिष्ठारूपं किंचित्तथात्वेन विवक्षति, इत्यनुमानात्तदनंतर 'मयं लोक इति होवाचे' ति शालावत्यवचनमपि ब्रह्मविषयं स्यात्[3] । ब्रह्मण एवासंकुचितसर्वप्रतिष्ठारूपत्वात् । 'ब्रह्म पुच्छम् प्रतिष्ठे'ति श्रवणाच्चेति चेत् ।

## तन्निरासः ।

मैवम्, तदनंतरं तद्ब्रह्मत्वगमकान्तवत्वश्रवणात्तद्गत्यंतरप्रपञ्चानुसारेण च तस्य प्रतिष्ठालोकत्वेन प्रसिद्धेः पृथिवीलोक एव विश्रांतेः, भूयोनुग्रहन्यायात् । 'इतः प्रदानं देवा उपजीवंति' तै. सं. इति श्रुत्यंतरानुसारेण,

'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः ॥ म० स्मृ० २ ।

इति स्मृत्यनुसारेण च पृथिवीलोकस्य स्वर्गलोकगतित्वौचित्याच्च । न चाकाशस्यानंतत्व कीर्तनानंतरं तद्विरुद्धश्रवणमण्वप्यस्ति वा न वा[1] ? भूताकाशस्य पृथिवीलोकगतित्वौचित्यमस्ति पृथिवीं तद्गतं प्राणिनिकायं वा प्रति विशिष्य भूताकाशस्योपजीव्यत्वप्रसिद्ध्यभावात् । सामादीन्प्रति-

---

१—श्रुतेरन्यथानयनमित्यर्थो बोध्यः । २—तत्वानुसारेणेति मु. पु. पा. ।
३—अविवादमिति ख. पु. पा. ।

तथापजीव्यत्वेन लोकतः श्रुतितो वा प्रसिद्धानामेव स्वरादीनां सामगतित्वस्य पूर्वग्रन्थे वर्णनात्। तर्हि पृथिवीलोकं प्रति ब्रह्मणोपि विशिष्य गतित्वप्रसिद्धिः नास्तीति, तस्यपि पृथिवीलोकगतित्ववचनं समंजसं न स्यादिति चेत्।

सत्यम्। नास्माभिरस्य लोकस्येति शालावत्यप्रश्नः पृथिवीलोकगतिविषय इत्युपेयते। किंतु सर्वलोकगतिविषय इति। पृथिवीलोकमात्रगतिविषयत्वे प्रत्यक्षादिसंन्निधापितसमस्तपरामर्शशक्तयो'रस्य लोकस्ये, ति श्रुत्योः पृथिवीलोकसन्निधानेन संकोचकल्पनापत्तेः। 'सर्वाणि ह्वा इमानि भूतानि, इत्याद्यग्रिमप्रपञ्चस्यासामंजस्यापत्तेश्च। आकाशस्य सर्वलोकगतित्वौक्तौ हि तदुपपादनार्थमग्रिमप्रपञ्चः संगच्छते। सर्वभूतोत्पत्तिलयस्थानत्वात् सर्वलोकं प्रति गतित्वमुपजीव्यत्वरूपमुपपन्नमिति पृथिवीमात्रगतित्वोक्तौ तावन्न वक्तव्यं स्यात्।

ननु स्वर्गलाकं प्रति पृथिवीलोकस्य गतित्वे उक्ते पृथिवीलोकं प्रत्येव गतौ प्रष्टव्यायां सर्वलोकगतिप्रश्नस्य कथं संगतिरितिचेत्। इत्थम्। 'अंतवद्वै किल ते' इति अन्तवत्त्वदोषोद्भावनेन स्वयमनंतं जैवलिर्गतित्वेन विवक्षती इति तावदवगतम्। अनंतं च–देशतः, कालतः, वस्तुतश्च परिच्छेदरहितम्। वस्तुतः परिच्छेदराहित्यं च सर्वोपादानतया सर्वात्मकस्यैव संभवति, तच्च सर्वलोकगतिरूपमिति निश्चित्य तत्कि सर्वलोकगतिरूपमनंतं वस्त्विति प्रश्न इति। एवं च सर्वलोकगतौ पृष्टायां तथात्वेन 'यतो वा इमानि भूतानि जायन्ते, इति, 'को ह्येवान्यात्कः प्राण्यादि' त्यादिश्रुत्यतरे ब्रह्म प्रसिद्धमिति, तस्य गतित्ववचनं युज्यते। 'अतएवानंतरग्रंथे'सर्वाणि ह्वा इति हवै, शब्देन सैव प्रसिद्धिः द्योत्यते। एवं चोपक्रमगतसर्वलोकगतित्वलिंगेनाप्याकाशश्रुतेरन्यथानयनमविकलम्। तथा भूयोनुग्रहन्यायेनाप्याकाशे सर्वलोकगतिसंबंधस्यैवावांतरतात्पर्येणापि प्रतिपाद्यतया आकाशस्य स्वरूपतः प्रतिपाद्यत्वरूपप्राधान्यासिद्धेः।

नन्वाकाशश्रुतिरपि पंचषवारमभ्यस्तेति भूयोनुग्रहन्याय उभयत्रापि तुल्य इति चेत्। न। तत्सर्वलोकगतित्वादीनामनंतत्वपर्यंतानां लिंगानां तदपेक्षया भूयस्त्वात् लिंगानुग्रहेऽपि श्रुतीनामपि कासांचिदनुग्रहलाभेन श्रुतिसाहित्येन भूयस्तरत्वाच्च लिंगान्यथाकरणे हि भूतश्रुतेराकाशसाधारणायाः सर्वश्रुतेश्च तत्साधारणसामरूपवाचिकाया आकाशव्यतिरिक्तेषु संकोचरूपो बाधःकल्पनीयः,'स एषोनंत,इत्यत्र' निषेध्यसमर्पकस्यांतशब्दस्य चाल्पकालावस्थायित्वे लक्षणा कल्पनीया,आकाशादेवेत्यवधारणश्रुतेश्चात्यतबाधः कल्पनीयः। अवधारणश्रुतिर्हि उपात्तसजातीयं व्यवच्छिनत्ति।

अतएव गृहमेधीयपरिसंख्यापक्षे 'आज्यभागौ यजती'त्यस्यावधारणार्थंलक्षकत्वेन आज्यभागसजातीययागांतरव्यवच्छेदकत्वं स्विष्टकृद्विधानस्येवावधारणार्थंलक्षकस्य शेषकार्यांतरव्यवच्छेदकत्वं च पूर्वतंत्रे 'नस्विष्टकृति भक्षप्रतिषेधः स्यात्तुल्यकारणत्वादि, १०—७—३५ त्यधिकरणे दर्शितम्। एवं चाकाशशब्दस्य मूलकारणब्रह्मपरत्वे भूतेषु तादृशकारणा 'तराभावा-त्संगताऽवधारणश्रुतिः। अव तरकारणरूपभूताकाशपरत्वे तु तेजःप्रभृतिषु वाय्वादीनमपि तादृशकारणानां सत्त्वेन तद्व्यवच्छेदासंभवादसंगतात्व-धारणश्रुतिः स्यात्। नहि पूर्वतंत्रे श्रुत्या मंत्रलिंगबाधे श्रुतिकल्पनामात्र-बाधवदिह श्रुत्युपस्थाप्यब्रह्मलिंगबाधे श्रुतिकल्पनामात्रबाधः, किंतु तत्तल्लिंगो-पस्थापककोट्यन्तर्गतक्लृप्तश्रुतिबाधोऽप्यवर्जनीयः। एवं च भूयसीनाम् ब्रह्मश्रुतिलिंगानामनुग्रहायाकाशश्रुतिरन्यथा नेयेत्यपि युक्तमेव। तस्माद-काशाधिकरणेपि नोपसंहारप्राबल्योपजीवनशंकावकाशः।

एवमन्यत्रापि तत्र तत्र संभावितानां शंकाशूकानां निरसनमूह-नीयम्। तस्मादुत्तरमीमांसायामप्युपक्रमप्राबल्यमविकलमविगीतञ्च। एवञ्च सकलमीमांसकव्यवहारविरुद्धो नयसरणिगंधानभिज्ञैरर्वाचीनैः स्वमतस्ये-तरमतवैलक्षण्यप्रकटनाय कल्पितोपक्रमोपसंहारबलाबलव्यत्ययः यवनगुरूपदिष्टशौच–मुखप्रक्षालनपौर्वापर्यव्यत्यासवदुपेक्षणीयः प्रामाणि-कैरिति सिद्धम्–इति।

विद्वद्गुरोर्विहितविश्वजिदध्वरस्य। श्रीसर्वतोमुखमहाव्रतयाजिसूनोः॥
श्रीरंगराजमखिनःश्रितचंद्रमौलेः। अस्त्यप्पदीक्षित इति प्रथितस्तनूजः॥
अकरोदयमक्लिष्टमात्मबुद्धिविशुद्धये। उपसंहृतदुर्न्यायमुपक्रमपराक्रमम्॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीरंगराजा-ध्वरिवरसूनोरप्पय्यदीक्षितस्य कृतिः उपक्रमपराक्रमस्संपूर्णः।



[1]—मखिवर्याणां वचनसन्दर्भं शब्दतः, अर्थतश्चाभ्रं ङयन्नुपसंहारविजयः आत्मानं कृतकृत्यं मनुते,न तु विषयपरीक्षणे प्रगल्भत इति। विशेषस्तु भूमिकायाम् द्रष्टव्यः।

# शुद्धाशुद्धपत्रिका

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २ | ६ | पादवद्ध | पादबद्ध |
| ३ | २ | यथाश्रुतार्थं | यथाश्रुतार्थे |
| ५ | १ | प्राबल्योक्यनन्तरम् | प्राबल्योक्तयनन्तरम्. |
| ,, | १४ | कतति | कर्त्तेति |
| ,, | २८ | तत्सृष्टतया | तत्सृष्टतया |
| ,, | २९ | जनकाग्यादि | जनकान्यादि |
| ६ | १४ | व्याख्यनुसारेण | व्याख्यानुसारेण |
| ,, | १८ | व्यासराज | व्यासराय |
| ,, | १९ | उ असंहारात् | उपसंहारात् |
| १० | २७ | विशेषोयलक्षणार्थं | विशेषोपलक्षणार्थम्. |
| ११ | ४ | दाविजे | दार्त्विजे॰ |
| ,, | ९ | उपक्रमाप्रावल्येन | उपक्रमप्राबल्येन |
| ,, | ११ | अधिकारातरस्य | अधिकारान्तरस्य |
| ,, | २२ | अनुसूरेण | अनुसारेण |
| १२ | १२ | उपक्रमसंहार | उपसंहार |
| ,, | १६ | विशेषवद्धारा | विशेषद्वारा |
| १३ | ४ | बहू | बहु |
| ,, | ५ | तदू | तद् |
| ,, | ६ | नोक्कर्षः | नोत्कर्षः |
| २० | २ | वाक्यर्थं | वाक्यार्थे |
| ,, | १८ | उच्चकैस्त्वे | उच्चैस्त्वे |
| २१ | १ | स्तोम | स्तोभ |
| ,, | २२ | सार्थकस्वेशंका | सार्थकत्वशंका |
| २२ | १५ | उपाशुत्व | उपांशुत्व |
| ,, | २७ | उच्चैष्ट्वादिनां | उच्चैष्ट्वादीनाम्. |
| २३ | २६ | तदन्यताक्ता | तदन्यत्रोक्ता |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २५ | १४ | भविष्यतीति संयातायातं प्रामादिकम् | |
| ,, | १९ | अधिकृत्याक्तम् | अधिकृत्योक्तम् |
| ,, | २३ | कर्मांगत्वन | कर्मांगत्वेन |
| ,, | २४ | लाघवन | लाघवेन |
| २८ | ४ | कृत्वाचिन्ता | कृत्वाचिन्तया |
| ,, | ७ | दक्षिण | दक्षिणा |
| ,, | १० | रूपस्याय | रूपस्याश्व |
| ,, | ११ | अव्यभिचारी | अव्यभिचरित |
| २९ | ६ | आक्षिप्ति | आक्षिप्त |
| ३० | ८ | अन्यतमंजन | अन्यतममंजन |
| ,, | ११ | रूपसंहारः | रुपसंहार |
| ,, | २० | भवत्येव कथनम् , | भवत्येव, कथम् |
| ३१ | २ | द्वितीयपंक्तौ वै, इत्यधिकः प्रामादिकः | |
| ,, | ५ | व्यासः | वासः |
| ,, | १० | वाघ | बाध |
| ,, | १४ | वेत | श्वेत |
| ३२ | २९ | वह्वये | वह्वर्थं |
| ३४ | ११ | निविशेष | निर्विशेष |
| ,, | १८ | कांस्याभोजि | कांस्यभोजि |
| ३५ | २ | ३ संख्याटिप्पणं ३४ पृष्ठेऽवगन्यन्तव्यम् | |
| ३६ | ७ | विचारेण | विचारणा |
| ३७ | २४ | तै० सं० १-४ | इति मन्तव्यम् |
| ३२ | १० | अधिषवणफलयोः | अधिषवणफलकयोः |
| ,, | ११ | दैर्घोण | दैर्घ्येण |
| ,, | १४ | यिनर्वपेत् | निर्वपेत् |
| ,, | १९ | वैदिके | लौकिके |
| ३९ | ९ | एतै | एते |
| ४१ | ६ | अनुष्टेयतया | अनुष्ठेयतया |
| ,, | ७ | विशेषकांक्षया | विशेषाकांक्षया |
| ,, | ८ | औ ज्वाल्यादि | औज्वल्यादि |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ,, | १६ | आम्नातोयजेः | आम्नातयजेः |
| ,, | १२ | ज्योतीषय | ज्योतींषि य एतस्य |
| ,, | २२ | दीक्षणीयादय | दीक्षणीयादयः |
| | २२ | सूत्र तस्य | सूत्रम्, तस्य |
| ४३ | २ | षाडशिग्रहस्य | षोडशिग्रहस्य |
| ४४ | ६ | गनुशासनतित्त | अनुशासनात्तिस्तः |
| ,, | १५ | आकांक्षाय | आकांक्षया |
| ,, | २० | वीन्नीय | वोन्नीय |
| ४५ | ४ | तिघृदादि | त्रिवृदादि |
| ,, | ५ | षिशेष | विशेष |
| ४६ | ७ | स्ववरेण | स्वरेण |
| ,, | १७ | व्रिहि | व्रीहि |
| ,, | २० | एकादर्शा | एकादशभिः |
| ४७ | ६ | छागयशु | छागपशु |
| ,, | १४ | अतएव अक्ताधिकरण | अतएवं अक्ताधिकरणे |
| ,, | १७ | यदग्रये प्रचापतये | यदग्नये च प्रजापतये |
| ,, | २० | तस्यात् | तस्मात् |
| ,, | ,, | सत्याप | सत्याक्षेपा |
| ,, | २२ | पश्रु | पशु |
| ,, | २३ | पश्रु | पशु |
| ,, | ,, | अध्रिप्र | अध्रिगुप्रैष |
| ४८ | २३ | मेधकरण | मेधपत्यधिकरण |
| ,, | ,, | अग्निषो | अग्निषोम |
| ४९ | २९ | गतमुच्चिद | गतोच्चिदधिकरण |
| ५० | ८ | त्यत्र | इत्यत्र |
| ,, | १० | आपौ | आपो वै |
| ,, | ,, | स्तुद्वारेण | स्तुतिद्वारेण |
| ५१ | ४ | उपासेय | उपमेय |
| ,, | १९ | अवश्यज्ञे | अवश्यज्ञ |
| ५३ | ५ | अवाचीनैः | अर्वाचीनैः |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ,, | २१ | पतिपद्यन्ते | प्रतिपद्यन्ते |
| ५४ | ४ | उदाहरणोमु | उदाहरणमु |
| ,, | ५ | चेदन्तयं | चेदन्यम् |
| ,, | ७ | जतिल | जर्तिल |
| ,, | ८ | नाररायानि | नारण्यानिति |
| ,, | ११ | खस्वाहुः | खल्वाहुः |
| ,, | १९ | वजुहुयात् | वा जुहुयात् |
| ,, | २१ | ग्रहणग्रहण | ग्रहणाग्रहण |
| ,, | २९ | उदाहतः | उदाहृतः |
| ५५ | ७ | कल्पयेद्येत्र | कल्पयेद्यत्र |
| ५७ | ४ | यच्छन्द | यच्छब्द |
| ,, | २९ | ३५-३९ पृष्ठयोरिति पूरणीयम् | |
| ५८ | २ | न स्वौपसंहारित्वेन प्राबल्यात् | न स्वौपसंहारिकत्वेन प्राबल्यात् |
| ५९ | १३ | जुह्वेति | जुह्वति |
| ,, | १४ | तस्मातत्र | तस्मात्तत्र |
| ,, | १८ | प्राणदृष्टेपो | प्राणदृष्टयो |
| ,, | २६ | स्यादिना- न तान्युपसंहार इति पठनीयम् | |
| ६० | २१ | वाह्य | बाह्याकाशसमान |
| ६१ | १ | तत्रपक्रम | तत्रोपक्रम |
| ,, | १३ | शंसन्नि | शंसनि |
| ६२ | १ | कुलस्यार्थे | कुलस्यार्थे |
| ,, | २२ | यूयार्थं | यूपार्थम् |
| ६३ | १० | वेदात | वेदान्त |
| ६४ | १३ | परामशित्व | परामर्शित्व |
| ,, | २२ | स्यादि इति | स्यादिति |
| ६५ | ३ | प्रश्नातरे | प्रश्नान्तरे |
| ६६ | २५ | पिलिंगस्य | विलिंगत्य |
| ६७ | ११ | लिंगमात्रस्याप | लिंगमात्रस्योपपादनम् |

इति शुद्धाशुद्धपत्रिका समाप्ता ।